॥ श्रीः ॥

श्रीमल्लक्ष्मीधरविरचितः

# कृत्यकल्पतरुः

## दानकाण्डम्

### मङ्गलाचरणम्

ॐ नमो विघ्नराजाय निर्विघ्नफलदायिने ।

येनाऽविच्छेदवेदध्वनिहृतकलिभिः[1] श्रोत्रियाणां पुरीभिः[2]
फुल्लाब्जामोदमाद्यन्मधुकरमुखरव्योमभागैस्तडागैः ।
चक्रे धात्री पवित्रा विभववितरणैरर्थिवाञ्छातिरिक्तैः
स श्रीमानेष लक्ष्मीधर इह तनुते पञ्चमं दानकाण्डम् ॥

### प्रतिज्ञा ( विषयनिर्देशः )

दानस्वरूपमाचष्टे देयादेयविवेचनम् ।
पात्राणां लक्षणं सम्यक् महादानानि षोडश ॥

The I. O. Ms. contains six leaves in the beginning belonging to a Nyāya work. कल्पतरु begins from the 6th leaf.

A. S. B. Ms. begins: श्रीगणेशाय—The Ms. is torn.

1 A. S. B., हृतकलितः

2 A. S. B., पुरोभिः

अत्र[1] पर्व्वतदानानि गुडधेन्वादिकानि च ।
तथा हेमगवीदानं [2]दानं च वृषभस्य च ॥
दानं कृष्णाजिनस्याऽपि भूमिदानमतः परम्[3] ।
सुवर्णदानमप्यत्र विद्यादानं वदत्यसौ ॥
कल्पदानं[4] तिथौ दानं दानं नक्षत्रलक्षितम् ।
अन्नदानमथाऽऽरोग्यदानं वक्ति द्विजोत्तमः ॥
अभयस्य तथा दानं [5]वदत्येष सुपुण्यधीः ।
तथा प्रकीर्णदानानि वापीकूपसरोविधिम् ॥
आरामस्य प्रतिष्ठां च दानमाश्रयलक्षणम् ।
दानकाण्डेऽत्र पर्वाणि क्रमाद्द्वाविंशतिर्मता ॥

1 Lost in A. S. B.

2 I. O., प्रदानं for दानं च

3 A. S. B. and I. O., अनन्तरम्

4 I. O., रूप्यदानं

5 A. S. B. and I. O., वर्णयत्येष

# १

# दानस्वरूपम्

अथ दानधर्मः

तत्र व्यासः महाभारते[1]

वर्णानामाश्रमाणां च चातुर्वर्ण्ये युधिष्ठिर ।
दानधर्मं प्रवक्ष्यामि यथा व्यासेन भाषितम् ॥

यद्ददासि विशिष्टेभ्यो यच्चाऽश्नासि दिने दिने ।
तत्ते वित्तमहं मन्ये शेषं कस्याऽपि [2]रक्षसि ॥

यद्ददाति यदश्नाति तदेव धनिनो धनम् ।
अन्ये मृतस्य क्रीडन्ति दारैरपि धनैरपि ॥

अहन्यहनि याचन्तमहं मन्ये गुरुं यथा ।
मार्जनं दर्पणस्येव यः करोति दिने दिने ॥

आयाससारलब्धस्य[3] प्राणेभ्योऽपि गरीयसः ।
गतिरेकैव वित्तस्य दानमन्या विपत्तयः ॥

किं धनेन करिष्यन्ति देहिनो भङ्गुरश्रियः ।
यदर्थं धनमिच्छन्ति तच्छरीरमशाश्वतम् ॥

यदि नाम न धर्माय न कामाय न कीर्त्तये ।
यत् परित्यज्य गन्तव्यं तद्धनं किं न दीयते ॥

जीविते[4] यस्य जीवन्ति विप्रा मित्राणि बान्धवाः ।

1 A. S. B. omits महाभारते

2 A. S. B., वक्ष्यसि

3 A. S. B. and I. O., आयासशत

4 A. S. B. is defective here.

सफलं जीवितं तस्य आत्मार्थे को न जीवति ॥
किं कायेन सुपुष्टेन बलिना चिरजीविना ।
यन्न सत्वोपकाराय तज्जीवितमनर्थकम् ॥
ग्रासादर्द्धमपि ग्रासमर्थिभ्यः किं न दीयते ।
इच्छानुरूपो विभवः कदा कस्य भविष्यति ॥
किं देहेन सुपुष्टेन सुपुष्टमपि यास्यति ।
अदाता पुरुषस्त्यागी [1]स्वधनं त्यज्य गच्छति ॥
दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति ।
प्राणिनां सति [2]मर्तव्ये यः कृतार्थो मृतो न सः ॥
अकृतार्थस्य यो मृत्युरन्तरं प्रलयो हि सः ।
अनाहूतेषु यद्दत्तं यच्च दत्तमयाचितम् ॥
भविष्यति युगस्यान्तस्तस्याऽन्तो न भविष्यति ।
मृतवत्सा यथा गौर्वै तृष्णा लुब्धा न दुह्यते ॥
परस्परस्य[3] दानानि लोकयात्रा न धर्मवत् ।
अदृष्टमश्नुते दानं दृष्ट्वा चैव न दृश्यते ॥
पुनरागमनं नास्ति तस्य दानमनन्तकम्[4] ।

मत्स्यपुराणे

न्यायेनाऽर्जनमर्थानां वर्द्धनं चाऽभिरक्षणम् ।
सत्पात्रप्रतिपत्तिश्च सर्वशास्त्रेषु पठ्यते ॥

1 I. O. and A. S. B., धनमुत्सृज्य

2 From मर्तव्य to मृत्युरन्तरम् in the next line the matter is missing in A. S. B.

3 The ं is missing, in A. S. B.

4 A. S. B., अनर्थकम्

## दानस्वरूपम्

अथ दानस्वरूपम्

तत्र देवलः

अथातो दानविधिं व्याख्यास्यामः ।

अर्थानामुदिते पात्रे श्रद्धया [1]प्रतिपादितम् ।
दानमित्यभिनिर्दिष्टं व्याख्यानं तस्य वक्ष्यते ॥

'उदिते' शास्त्रप्रतिपादिते ।

द्विहेतुः षडधिष्ठानं षडङ्गं षड्विपाकयुक् ।
चतुःप्रकारं त्रिविधं त्रिनाशं दानमुच्यते ॥
नाऽल्पत्वं न बहुत्वं वा दानस्याऽभ्युदयावहम् ।
श्रद्धा भक्तिश्च दानानां वृद्धिक्षयकरे हि ते ॥
धर्ममर्थं च कामं च व्रीडाहर्षभयानि च ।
अधिष्ठानानि दानानां षडेतानि प्रचक्षते ॥
पात्रेभ्यो दीयते नित्यमनवेक्ष्य प्रयोजनम् ।
केवलं धर्मबुद्ध्या यद्धर्मदानं तदुच्यते ॥
प्रयोजनमवेक्ष्यैव प्रसङ्गात् यत् प्रदीयते ।
तदर्थदानमित्याहुः इहैकफलहेतुकम् ॥
स्त्रीयानमृगयाक्षाणां प्रसङ्गाद्यत्प्रदीयते ।
अनर्हेषु[2] च रागेण कामदानं तदुच्यते ॥

1 A. S. B., प्रतिपादनम्
2 I. O. and A. S. B., अहतेषु

संसदि व्रीडया [1]श्रुत्या योषिद्भ्यो यत् प्रदीयते ।
अयाचितश्चेत्तद्दानं[2] व्रीडादानमिति स्मृतम् ॥
दृष्ट्वा प्रियाणि श्रुत्वा वा हर्षवद्यत्प्रदीयते ।
हर्षदानमिति प्राहुः दानं तद्धर्मचिन्तकाः ॥
आक्रोशानर्थहिंस्राणां[3] प्रतीकाराय यद्भयात् ।
दीयते [4]ह्यपकर्तृभ्यो भयदानं तदुच्यते ॥
दाता प्रतिग्रहीता च श्रद्धा देयं च धर्मयुक् ।
देशकालौ च दानानामङ्गान्येतानि षड्विदुः ॥
अपापरोगी धर्मात्मा दित्सुरव्यसनः शुचिः ।
अनिन्द्यजीवकर्मा[5] च षड्भिर्दाता प्रशस्यते ॥
त्रिशुक्लः[6] कृशवृत्तिश्च घृणालुः सकलेन्द्रियः ।
विमुक्तो योनिदोषेभ्यो ब्राह्मणः पात्रमुच्यते ॥
सौमुख्याद्यतिसम्प्रीतिरर्थिनां[7] दर्शने सदा ।
सत्कृतिश्चाऽनसूया च तदा श्रद्धेति कीर्त्यते ॥
अपराबाधमक्लेशं [8]स्वयत्नेनाऽर्जितं धनम् ।
स्वल्पं वा विपुलं वाऽपि देयमित्यभिधीयते ॥

1 Thus I. O.; श्रुत्यवाप्नोऽर्थेभ्यः प्रयाचितमर्थिभ्यो यत्प्रदीयते is the corrupt reading of Udaipur Ms.

2 I. O., प्रयाचितश्चेत्

3 A. S. B., सिंहानां

4 I. O., चापकर्तृभ्यः

5 Whole line missing in A. S. B.

6 I. O., त्रिशुल्कः

7 I. O., ह्यभि

8 I. O. and A. S. B., प्रयत्नेन

यत्र यद्दुर्लभं द्रव्यं यस्मिन् कालेऽपि वा पुनः ।
दानार्हौ देशकालौ तौ स्यातां श्रेष्ठौ न चाऽन्यथा ॥
अवस्थादेशकालानां पात्रदात्रोश्च सम्पदाम् ।
हीनं चाऽपि भवेच्छ्रेष्ठं श्रेष्ठं वाऽप्यन्यथा [1]भवेत् ॥
दुष्फलं निष्फलं हीनं तुल्यं विपुलमक्षयम् ।
षड्विपाकयुगुद्दिष्टं षडेतानि विपाकतः ॥
नास्तिकस्तेनहिंस्रेभ्यो जाराय पतिताय च ।
पिशुनभ्रूणहन्तृभ्यः प्रदत्तं दुष्फलं भवेत्[2] ॥
महदप्यफलं दानं श्रद्धया [3]परिवर्जितम् ।
परबाधाकरं दानं परमप्यल्पतां व्रजेत् ॥
यथोक्तमपि [4]यद्दानं चित्तेन कलुषेण तु[5] ।
तेन[6] सङ्कल्पदोषेण दानं तुल्यफलं भवेत् ॥
युक्ताङ्गैस्सकलैः षड्भिर्दानं स्याद्विपुलोदयम् ।
अनुक्रोशवशाद्दत्तं दानमक्षयतां व्रजेत् ॥
ध्रुवमाजस्रिकं[7] काम्यं नैमित्तिकमिति क्रमात् ।
वैदिको दानमार्गोऽयं[8] चतुर्द्धा वर्ण्यते द्विजैः ॥
प्रपारामतडागादि सर्वकालफलं ध्रुवम् ।

1 Udaipur Ms., लभेत्
2 I. O., लभेत्
3 I. O. and A. S. B., परिवर्तितम्
4 I. O. and A. S. B., यद्दत्तं
5 I. O., वा
6 A. S. B., तत्तु
7 I. O., आजस्रिकं
8 I. O. and A. S. B., वैदिकैः दानमार्गोऽपि

तदाजस्रिकमित्याहुः दीयते यद्दिने दिने ॥
[1]अपत्यविजयैश्वर्यस्त्रीबालार्थं यदिज्यते ।
इज्यासंज्ञन्तु तद्दानं [2]काममित्यभिधीयते ॥
कालापेक्षं [3]क्रियापेक्षमन्वापेक्षमिति स्मृतौ[4] ।
त्रिधा नैमित्तिकं प्रोक्तं सहोमं होमवर्जितम् ॥
नवोत्तमानि[5] चत्वारि मध्यमानि विधानतः ।
अधमानीति शेषाणि त्रिविधत्वमिदं विदुः ॥
अन्नं दधि मधु त्राणं गोभूरुक्माश्वदन्तिनः ।
दानान्युत्तमदानानि[6] उत्तमद्रव्यदानतः ॥
विद्यादाच्छादनावासपरिभोगौषधानि च ।
दानानि मध्यमानीति मध्यमद्रव्यदानतः ॥
उपानत्प्रेंखदानानि छत्रपात्रासनानि च ।
दीपकाष्ठफलादीनि चरमं बहुवार्षिकम् ॥
बहुत्वादनुजातानां संख्या [7]शेषेषु नेष्यते ।
अधमान्यवशिष्टानि सर्वदानान्यतो विदुः ॥
इष्टं दत्तमधीतं [8]च विनश्यत्यनुकीर्त्तनात् ।

1 I. O. and A. S. B., अपत्यविजयैस्वर्य

2 I. O. and A. S. B., काम्यमित्यभिधीयते

3 A. S. B., त्रियापेक्षम्

4 A. S. B., स्मृतम्

5 A. S. B., न चोत्तमानि

6 I. O., and A. S. B., दानाद्युत्तम

7 A. S. B., देशेषु नेक्ष्यते

8 I. O. वा ; the whole s'loka is missing in A. S. B.; Udaipur Ms. is corrupt and reads श्री क शोचनाभ्यां in the second line.

श्लाघानुशोचनाभ्यां च भग्नतेजा विपद्यते ॥
तस्मादात्मकृतं पुण्यं न वृथा परिकीर्त्तयेत् ।
भुक्तवानिति तं [1]प्राहुस्तमेवं कृतवादिनः ॥
एवं* सर्वगुणोपेतमुक्तदोषैः [2]विवर्जितम् ।
इह[3] कीर्तिं वदान्याख्यां स्फीतान् भोगान् त्रिविष्टपे ।
दानं श्रद्धां तृतीयेऽपि जन्मनि प्रसवोत्तमे ॥
सर्वेषामपि दानानां अन्नदानमनुत्तमम् ।
कोऽन्योऽस्ति प्राणदादस्माद्विशिष्टो नाऽन्नदात् परः ॥
अन्यायाधिगतां दत्वा सकलां वसुधामपि ।
श्रद्धावर्जमपात्राय न किञ्चित् गतिमाप्नुयात् ॥
प्रदाय [4]सानुमूर्त्तिं च श्रद्धाभक्तिसमन्वितम् ।
महते पात्रभूताय सर्वाभ्युदयमाप्नुयात् ॥

'द्विहेतुः' वक्ष्यमाणश्रद्धाभक्तिरूपहेतुभेदेन। 'अधिष्ठानानि' आश्रयाणि। 'देयं' तत्वेन देयं द्रव्यम्। 'धर्मयुक्' धर्मयुक्तम्। न्यायार्जितमित्यन्यः। 'पापरोगो' राजयक्ष्मादयः। 'सकलेन्द्रियः' अविकलेन्द्रियः। 'दुष्फलं' विपरीतफलम्। 'परं' श्रेष्ठम्। 'अनुक्रोशो' दया। 'परिभोगसाधनं' [5]खट्वा-

1 I. O., तं प्राहुः तमेव कृतवादिनः

* From here there is a big gap up to येन येन on page 11, which is filled up in the text from I. O.

2 A. S. B., विवर्जितः .

3 A. S. B., तम् फलम्

4 A. S. B., शाकमुष्टिं वा

5 A. S. B., गर्तासनादि

सनादि। 'बहुवार्षिकं' बहूनि वर्षाणि प्राप्तं [1]धरातलमिति यावत्। एतेनोत्तममपि जीर्णतां प्राप्तमधमं भवति। 'श्लाघा' प्रशंसा, [2]'वृथावक्ता' प्रयोजनव्यतिरेकेण। 'प्रसवोत्तमे' प्रसूयतेऽनेनेति 'प्रसवः' कुलम्। तस्मिन्नुत्तमे।

मनुः

श्रद्धयेष्टं च पूर्तं च नित्यं कुर्यात् प्रयत्नतः।
श्रद्धाकृते [3]ह्यक्षये ते भवतः स्वागतैर्धनैः॥
दानधर्मं निषेवेत नित्यमैष्टिकपौर्तिकम्[4]।
परितुष्टेन भावेन पात्रमासाद्य शक्तितः॥
यत्किञ्चिदपि दातव्यं याचते [5]चाऽनसूयया।
उत्पत्स्यते हि तत्पात्रं यत्तारयति सर्वतः॥

'स्वागतैः' न्यायार्जितैः। 'ऐष्टिकं' इष्टौ यज्ञे यद्दीयते दक्षिणादि। "बहिर्वेदि च यद्दानं तत् पौर्तिकं" इति मेधातिथिः।

याज्ञवल्क्यः

गोभूतिलहिरण्यादि पात्रे दातव्यमर्चितम्।
नाऽपात्रे विदुषा किञ्चिदात्मनः श्रेय इच्छता॥

1 A. S. B., पुरातनन्विति

2 A. S. B., श्लाघा, प्रशंसा वृथा रक्षादिप्रयोजनव्यतिरेकेण, प्रसवोत्तमे

3 A. S. B., अभ्युदये

4 A. S. B., पूर्तिकम्

5 A. S. B., नाऽनसूयया

दातव्यं प्रत्यहं पात्रे [1]निमित्ते सविशेषतः ।
याचितेनाऽपि दातव्यं श्रद्धापूतेन शक्तितः ॥
येन येन हि भावेन यद्यद्दानं प्रयच्छति ।
तेन तेन हि भावेन प्राप्नोति प्रतिपूजितः ॥
'येन येन हि भावेन' राजसतामसादिना ।

महाभारते

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्विकं विदुः ॥
यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्दानं राजसं विदुः ॥
अदेशकाले यद्दानमपात्रेभ्यः प्रदीयते ।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥

याज्ञवल्क्यः

देयं प्रतिश्रुतं चैव दत्वा नाऽपहरेत् पुनः ।

यमः

यच्च वाचा प्रतिज्ञातं कर्मणा नोपपादितम् ।
तद् धनं ऋणसंयुक्तं इह लोके परत्र च ॥
सप्त जातान्नरो हन्यात् वर्त्तमानांश्च सप्त च ।
अतिक्रान्तान् सप्त हन्यादप्रयच्छन् प्रतिश्रुतम् ॥
प्रतिश्रुताप्रदानेन. दत्तस्याऽऽच्छेदनेन च ।
जन्मप्रभृति यत्पुण्यं तत्सर्वं तस्य नश्यति ॥

1 A. S. B., निमित्तेषु

आशां कृत्वा ह्यदातारं दानकाले निषेधकम् ।
दत्वा सन्तप्यते यस्तु तमाहुर्ब्रह्मघातिनम्[1] ॥

महाभारते

ब्राह्मणं स्वयमाहूय भिक्षार्थे कृशवृत्तिकम् ।
ब्रूयान्नास्तीति यः पश्चात्तं विद्याद् ब्रह्मघातकम् ॥

तथा[2]

संश्रुत्य यो न दित्सेत याचित्वा यश्च नेच्छति ।
उभावनृतिनावेतौ मृषा पापमवाप्नुतः ॥

गौतमः

प्रतिश्रुत्याऽप्यधर्मसंयुक्ताय न दद्यात् ॥

नारदः

ब्राह्मणस्य च यद्देयं सान्वयस्य च नास्ति सः[3] ।
सकुल्ये तस्य निनयेत्तदभावेऽस्य बन्धुषु ॥
यदा तु न सकुल्यः स्यान्न च सम्बन्धिबान्धवाः ।
दद्यात्सजातिशिष्येभ्यस्तदभावेऽप्सु निक्षिपेत् ॥

यमः

योऽर्चितः प्रतिगृह्णाति योऽर्चयित्वा प्रयच्छति ।
तावुभौ वसतः स्वर्गे विपरीते विपर्ययः ॥

1 I. O. and A. S. B., घातकम्
2 I. O. omits तथा
3 I. O., नास्ति कः

दानं हि बहुमानाद्यो गुणवद्भ्यः प्रयच्छति ।
स तु प्रेत्य धनं लब्ध्वा पुत्रपौत्रैः सहाऽश्नुते ॥

परं चानुपहत्येह दानं दत्वा विचक्षणः ।
सुखोदयं सुखोदर्कं प्रेत्य वै लभते धनम् ॥

योऽसद्भ्यः[1] प्रतिगृह्याऽपि पुनः सद्भ्यः प्रयच्छति ।
आत्मानं संक्रमं कृत्वा परांस्तारयते हि सः ॥

तस्मात्तुल्यविशिष्टेभ्यो दानं[2] दद्यात्प्रयत्नतः[3] ।
विद्यातपस्समृद्ध्या[4] हि तारयन्ति द्विजोत्तमाः ॥

'अनुपहत्य'[5] पीडामनुत्पाद्य । 'असद्भ्यो' निन्दितेभ्यः । 'तुल्यः' अनिन्दितः । गुणवत उत्तमं फलम् ॥

बृहस्पतिः

कृते प्रयच्छते[6] गत्वा त्रेतायां दीयते गृहे ।
द्वापरे प्रार्थयति च कलौ चाऽनुगमान्विते ॥

सर्वत्र गुणवद्दानं श्वपाकादिष्वपि स्मृतम् ।
देशे काले विधानेन पात्रे दत्तं विशेषतः ॥

1 I. O. omits यो
2 I. O., तत्र
3 I. O., द्विचक्षणः
4 I. O., समृद्धा
5 I. O. omits this वाक्य
6 I. O. and A. S. B., प्रदीयते

मन्त्रादिदोषात्[1] होमे तु तपसीन्द्रियदोषतः ।
न्यूनता स्यान्न दाने तु श्रद्धायुक्ते भवेत्क्वचित् ॥

आपस्तम्बः

देशतः कालतः शौचतः सम्यक् [2]प्रतिगृह्णीयात्

इति दानानि प्रतिपादयति । 'देशतः' [3]प्रयागादौ । 'कालतः' ग्रहणादौ । 'शौचतः' स्नानादिना ।

दक्षः

दानं च विधिवद्देयं काले पात्रे गुणान्विते ।

[4]उदकस्तुतिमभिधाय हारीतः

तस्मादद्भिरवोक्ष्य दद्यादालभ्य वा ।

'अवोक्ष्य' प्रोक्षणं कृत्वा । 'आलभ्य' सोदकेन पाणिना स्पृष्ट्वा ।

आपस्तम्बः

सर्वाण्युदकपूर्वाणि दानानि यथा श्रुतिविहारे ।

'विहारे' यज्ञे अन्वाहार्यदानादौ । 'यथाश्रुति' यावदेव श्रुतं तावदेव कुर्यान्नोदकपूर्वकतादिनियम इत्यर्थः ।

1 Line omitted by Udaipur Ms., I. O. and A. S. B.

2 I. O., प्रहीतभूत

3 I. O., वाराणस्यादौ

4 Passage corrupt; corrected following I. O.

गौतमः

स्वस्तिवाच्य भिक्षादानमप्पूर्वं [1]दद्यात्त्रिषु चैवंधर्मसु[2]

शातातपः

अभिगम्य तु यद्दानं यच्च दानमयाचितम् ।
विद्यते सागरस्यान्तस्तस्याऽन्तो नैव विद्यते ॥
प्रच्छन्नानि च दानानि ज्ञानं च निरहंकृतम् ।
तपांसि च सुगुप्तानि तेषां फलमनन्तकम् ॥

यमः[3]

यतीनां परमो धर्मस्त्वनाहारो वनौकसाम् ।
दानमेव गृहस्थानां शुश्रूषा ब्रह्मचारिणाम् ॥
यतीनां परमो धर्मो यद्योगेनाऽऽत्मदर्शनम् ।

1 Udaipur Ms. अप्यूर्ध्वं

2 I. O. and A. S. B., धर्मेषु

3 I. O. and A. S. B transpose the two lines and ascribe them to यम

# अथ देयादेयानि

बृहस्पतिः[1]

कुटुम्बभक्तवसनाद्देयं यदतिरिच्यते ।
मध्वास्वादे विषं पश्चाद्दातुर्द्धर्मोऽन्यथा भवेत् ॥

मनुः

शक्तः परजने दाता स्वजने दुःखजीविनि ।
मध्वापातो विषास्वादः स धर्मप्रतिरूपकः[2] ॥
भृत्यानामुपरोधेन यः करोत्यौर्ध्वदैहिकम् ।
तद्भवत्यशुभोदर्कं[3] [4]जीवतोऽपि मृतस्य च ॥

कात्यायनः

सर्वस्वगृहवर्ज्यन्तु कुटुम्बभरणादिकम् ।
यद्द्रव्यं तत्स्वकं देयं [5]न देयं स्यात्ततोऽन्यथा ॥

याज्ञवल्क्यः

कुटुम्बस्याऽविरोधेन[6] देयं दारसुताहृते ।
नाऽन्वये सति सर्वस्वं यच्चाऽन्यस्मै प्रतिश्रुतम् ॥

1 A. S. B. and I. O., तत्र
2 I. O., प्रतिरूपकम्
3 A. S. B and I. O., तद्भवेद् .
4 I. O., जीवतोऽस्य
5 I. O., अदेयं स्यादतोऽन्यथा
6 A. S. B., स्वकुटुम्बाविरोधेन

'अन्वये' सन्ताने ।

दक्षः

सामान्यं याचितं न्यासमाधिर्दाराश्च तद्धनम् ।
अन्वाहितं च निक्षेपः सर्वस्वं चाऽन्वये सति ॥
आपत्स्वपि न देयानि नव वस्तूनि पण्डितैः ।
यो ददाति स मूढात्मा प्रायश्चित्तीयते हि सः[1] ॥

'सामान्यम्' अनेकस्वामिकम्[2] । 'याचितं' संव्यवहारार्थं याचित्वा आनीतं वस्त्रालङ्कारादि । 'न्यासः' गृहस्वामिने दर्शयित्वा तत्परोक्षमेव[3] गृहजनहस्ते[4] गृहस्वामिने समर्पणीयमिति द्रव्यस्थापनम् । 'तद्धनं' [5]दारधनम् । 'अन्वाहितं'[6] यदेकस्य हस्ते निहितं द्रव्यं तेनाप्यनु पश्चादन्यहस्ते[7] स्वामिने [8]देहीति निहितम् । 'निःक्षेपो' गृहस्वामिनः समक्षं द्रव्यस्थापनम् ।

कात्यायनः

विक्रयं चैव दानं च न [9]नेयाः स्युरनिच्छवः ।

1 I. O., नरः for हि सः
2 I. O., स्वम् for स्वामिकम्
3 I. O., परोक्षतः
4 I. O., हस्तेन
5 I. O. omits दारधनम्
6 I. O., अन्वाहितम्
7 A. S. B and I. O., अन्यस्य हस्ते
8 I. O. omits देहीति निहितम्
9 A. S. B., न देयाः

दाराः पुत्राश्च सर्वस्वमात्मनैव[1] तु योजयेत् ॥
आपत्काले तु कर्तव्यं दानं विक्रय एव च[2] ।
अन्यथा न प्रवर्तेत इति [3]शास्त्रेषु निश्चयः ॥

"आपत्काले तु कर्तव्यं दानं विक्रय एव [4]चे"ति [5]स्वकीयविक्रयेच्छुदारादिविषयम् । यत्तु दाराणां 'आपत्स्वपि न देयत्वमि'ति[6] दक्षेणाऽदेयत्वमुक्तं [7]तत्स्वदानविक्रयेच्छुदारादिविषयम्[8] ।

वसिष्ठः

शुक्रशोणितसम्भवः पुरुषो मातापितृनिमित्तकस्तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतः। न त्वेकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा। स हि सन्तानाय [9]पूर्वेषाम् [10]न तु स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वाऽन्यत्राऽनुज्ञानाद्भर्तुः ।

यमः

परिभुक्तमवज्ञातमपर्याप्तमसंस्कृतम् ।

1 I. O., आत्मन्येव
2 I. O., वा for च
3 I. O., शास्त्र [ वि ] निश्चयः
4 I. O., वा for च
5 I. O., स्वदान
6 I. O., न देयानीति
7 I. O., विक्रेयानिच्छु
8 A. S. B and I. O., दारविषयम्
9 I. O., सर्वेषाम्
10 I. O. omits न तु

यः प्रयच्छति विप्रेभ्यस्तद्भस्मन्यवतिष्ठते[1] ॥

'परिभुक्तं' गृहीतोपभोगं वस्त्रादि । 'अपर्याप्तं' स्वकार्याक्षमं जरद्गवादि ।

रामायणे

नावज्ञाय प्रदातव्यं किञ्चिद्वा[2] केनचित् क्वचित् ।
अवज्ञया [3]तु यद्दत्तं दातुस्तद्दोषमावहेत् ॥

शातातपः[4]

वेदविक्रयनिर्दिष्टं स्त्रीषु यच्चार्जितं धनम् ।
अदेयं पितृदेवेभ्यो यच्च क्लीबादुपागतम् ॥

'वेदविक्रयनिर्दिष्टं' वेदविक्रयेण[5] च धनेन निर्दिश्यते यत् तत्तथा । 'स्त्रीषु यच्चार्जितं' [6]स्त्रीव्यापारोपजीवनेन यल्लब्धम् ।

वृद्धशातातपः

द्रव्येणाऽन्यायलब्धेन यः करोत्यौर्द्ध्वदेहिकम् ।
न स तत्फलमाप्नोति तस्याऽर्थस्य दुरागमात् ॥

1 Udaipur Ms. reads wrongly भस्तान्यवतिष्ठते

2 I. O., यत्किञ्चित्

3 I. O., हि for तु

4 I. O. has this verse after the verse of वृद्धशाततपः below.

5 A. S. B. and I. O., वेदविक्रयेण लब्धमेतदिति यन्निर्दिश्यते

6 I. O. interpolates धनं between आर्जितं and स्त्रीव्यापार

यमः

सुवर्णरजतं ताम्रं यतिभ्यो यः प्रयच्छति ।
न तत्फलमवाप्नोति तत्रैव परिवर्त्तते ॥

'तत्रैव परिवर्त्तते' पारलौकिकं न भजते[1] इत्यर्थः ॥

देवलः

पक्वमन्नं गृहस्थस्य वानप्रस्थस्य गोरसः[2] ।
वृत्तिश्च[3] भैक्ष्यवृत्तिभ्यो न देयं पुण्यमिच्छता ॥

'वृत्तिः' भिक्षातिरिक्तं वर्त्तनम् ।

तथा

न शूद्राय [4]घृतं दद्यात् स्वस्ति क्षीरं [5]तिलान् दधि ।
न शूद्रात् प्रतिगृह्णीयात्तेषामन्यन्निवेदयेत् ॥
गोरसं काञ्चनं क्षेत्रं गास्तिलान्मधुसर्पिषी ।
तथा सर्वानिमांश्चापि[6] चाण्डालेभ्यो न दापयेत् ॥

'तेषाम्' हविरादीनाम् ॥

शङ्खलिखितौ

कृसरपायसापूपदधिमधुघृतकृष्णाजिनानि शूद्रेभ्यो न

1 I. O., न भवति

2 I. O., गोरसाः

3 I. O., वृत्तिं च भैक्ष्यवृत्तीनां

4 I. O., हविर्दद्यात्

5 I. O., घृतं मधु for तिलान् दधि

6 A. S. B an dI. O., सर्वान् रसांश्चापि

दद्यात् । [1]नोपाकृतं किञ्चित् ।

अङ्गिराः

बहुभ्यो न प्रदेयानि गौर्गेहं शयनं स्त्रियः ।
विविक्तदक्षिणा[2] त्वेषां[3] दातारं तारयन्ति हि ॥
एका[4] एकस्य दातव्या न बहुभ्यः कथञ्चन ।
सा तु विक्रयमापन्ना दहत्यासप्तमं कुलम् ॥
देवतानां गुरूणाञ्च मातापित्रोस्तथैव च ।
पुण्यं देयं प्रयत्नेन नाऽपुण्यं चोदितं क्वचित् ॥

यमः

कल्मषं ब्राह्मणे दत्वा दाता यात्यशुभां गतिम् ।
जीर्णो [5]निर्मोकनिर्मुक्तः पन्नगेन्द्रः क्षितौ यथा ॥

नन्दिपुराणे

पापदः पापमाप्नोति नरो लक्षगुणं सदा ।
पुण्यदः पुण्यमाप्नोति शतशोऽथ सहस्रशः ॥
तथा पात्रविशेषेण दानं स्यादुत्तरोत्तरम् ।
गुरुमातृपितृब्रह्मवादिनां दीयते तु यत् ॥
तल्लक्षगुणितं विद्यात् पुण्यं वा पापमेव वा ।

1 A. S. B., नोपकृतं ; I. O., नोपाहृतं
2 A. S. B. and I. O., विभक्त
3 A. S. B., दक्षिणा ह्येषा ; I. O., दक्षिणा त्वेता
4 I. O., एकैका हि
5 I. O., जीर्णनिर्मोकनिर्मुक्तः

यमः[1]

देवमाल्यापनयनं देवागारसमूहनम् ।
माल्यप्रदानं[2] देवानां गोप्रदानसमं स्मृतम् ॥
अर्चनं चैव विप्राणां द्विजोच्छिष्टापकर्षणम् ।
पादशौचप्रदानं च अकल्यपरिचारणम् ॥
पादाभ्यङ्गप्रदानं[3] च गात्रसंवाहनं तथा ।
गवां कण्डूयनं चैव ग्रासदानाभिवन्दने[4] ॥
भिक्षादीपप्रदानं च तथैवातिथिपूजनम् ।
एकैकस्य फलं प्राह गोप्रदानसमं यमः ॥

'अकल्यपरिचारणं' रोगिचिकित्सा । 'गात्रसंवाहनं' अङ्गमर्दनम् ।

हारीतः

असद्द्रव्यप्रदानं अस्वर्ग्यं यच्च दत्वा परितप्यते तदाऽदानमफलम्, यच्चोपकारिणे ददाति तन्मात्रपरिशिष्टम्[5], यच्च सोपधं ददाति अभ्याश्रावितमल्पफलम्[6], यच्चापात्राय ददाति अनिष्टदानं भवति, यच्च दत्वा परिकीर्त्यते, यच्च स्मयदान मासुरं, यच्चाऽश्रद्धया ददाति क्रोधाद्राक्षसम् , यच्चाऽऽक्रुश्य

1 A. S. B. and I. O. supply यमः—देवमाल्य etc.

2 A. S. B and I. O., स्नपनं सर्वं०

3 I.O., पदाभ्यङ्ग

4 I. O., अभिनन्दने

5 I. O., परिक्लिष्टं

6 I. O., अफलं

ददाति दत्वा चाऽऽक्रोशति असत्कृतं पैशाचम्, यच्चावज्ञातं ददाति दत्वा चाऽवज्ञायते[1] मुमूर्षुस्तत्तामसम्, यच्चाप्राकृतो[2] ददाति [3]एते दानोपसर्गाः। यैरुपसृष्टं दानमसिद्धमसम्बद्धमस्वर्ग्यमयशस्यं [4]अध्रुवमफलं वा।

'तदाऽदानम्' तस्मिन्नेव सङ्कल्पकाले[5] दीयमानद्रव्यासमर्पणम्। 'उपकारिणे' प्रत्युपकारसमीहयेत्यर्थः। 'तन्मात्रं' यावद्दत्तं तावन्मात्रम्। 'सोपधं' स्नेहाद्युपाधिसहितम्। 'अभ्याश्रावितं' लोकप्रतीत्यर्थं[6] प्रख्यापितम्। 'अनिष्टदानं' शत्रवे दानम्। 'स्मयदानं' स्मयो न मादृशोऽन्यो दाताऽस्तीत्येवंविधो भावविशेषः[7]। तेन भावविशेषेण यद्दानम्। 'अप्राकृतो' मन्त्रादिः।

शातातपः

प्रश्नपूर्वं तु यो दद्याद् ब्राह्मणाय प्रतिग्रहम्।
स पूर्वं [8]निरयं याति ब्राह्मणस्तदनन्तरम्॥

1 A. S. B., अवजानीते

2 A. S. B., प्राकृते

3 A. S. B. interpolates before एते 'अध्रुवफलं भवति अल्पफलं वा तर्हि अदानम्'।

4 I. O., अध्रुवफलं भवत्यफलं

5 I. O., संकल्प्याकाले

6 I. O., प्रसिध्यर्थं

7 I. O., विशेषतः

8 I. O., नरकम्

'प्रश्नपूर्वं' [1]अमुं खण्डं बहु वा स्वर्वेलितं(?) यदि पठसि तदा तव तावद्ददामीति प्रश्नपूर्वम् ।

यमः[2]

अवमानेन यो दद्याद् गृह्णीयाद्यः प्रतिग्रहम् ।
तावुभौ नरके मग्नौ वसेतां शरदां शतम् ॥

मनुः

यज्ञोऽनृतेन क्षरति तपः क्षरति विस्मयात् ।
आयुर्विप्रापवादेन दानं च परिकीर्त्तनात् ॥

शातातपः

मा ददस्वेति यः[3] कुर्याद्द्रव्यग्नौ ब्राह्मणेषु च ।
तिर्य्यग्योनिशतं गत्वा चाण्डालेष्वभिजायते ॥

यमः

कन्याप्रदाने यज्ञे वा ह्यन्यस्मिन् धर्मसङ्कटे ।
विघ्नमाचरते यस्तु तमाहुर्ब्रह्मघातकम् ॥
स्नातानामनुलिप्तानां लालसानां मनीषिणाम् ।
नरस्तु मूढभावेन विघ्नकृत्[4] ब्रह्मघातकः ॥

1 A. S. B and I. O. have after, प्रश्नपूर्वं 'यद्यस्खलितममुं वेदभागं पठसि तदा तवेदं ददामी'ति व्यवस्थापूर्वम् ।

2 यम is not mentioned in A. S. B. and I. O.

3 A. S. B and I. O., ब्रूयाद्द्रव्यग्नौ

4 I. O., विघ्नं स्यात्

ब्राह्मणानां समेतानां सर्वेषां पठतामपि ।
विघ्नमाचरते यस्तु तमाहुर्ब्रह्मघातकम् ॥

महाभारते

मध्यस्थस्येह विप्रस्य योऽनूचानस्य भारत ।
वित्तं हरति दुर्बुद्धिस्तं विद्याद् ब्रह्मघातकम् ॥
चक्षुषा विप्रहीणस्य पङ्गुलस्य जडस्य च ।
हरेत यो वै सर्वस्वं तं विद्याद् ब्रह्मघातकम् ॥
आश्रमे वा [1]पुरे वाऽपि ग्रामे वा यदि वा वने ।
अग्निं समुत्सृजेत्कोपात्तं विद्याद् ब्रह्मघातकम् ॥

तथा—

अधीयानः पण्डितम्मन्यमानो
यो विद्यया हन्ति यशः परेषाम् ।
ब्रह्म[2] गते नाऽऽचरते ब्रह्महत्यां
लोकास्तस्य ह्यन्तरन्तो भवन्ति ॥

1 I. O., पुरे वाऽथ

2 A. S. B and I. O have ब्राह्मणस्तेनाऽऽहरतो ब्रह्महत्यां लोकास्तस्य ह्यन्तरन्तो भवन्ति ।

# ३

# अथ [1]पात्राणां लक्षणम्

[2]तत्र यमः

शीलं संवसता ज्ञेयं शौचं संव्यवहारतः ।
प्रज्ञा [3]सङ्कथनात् ज्ञेया त्रिभिः पात्रं परीक्ष्यते ॥

'सङ्कथनं' सुहृद्भावेन विद्याकथा ।

याज्ञवल्क्यः

तपस्तप्त्वाऽसृजद्ब्रह्मा ब्राह्मणान् वेदगुप्तये ।
तृप्त्यर्थं पितृदेवानां धर्मसंरक्षणाय च ॥

सर्वस्य प्रभवो विप्राः श्रुताध्ययनशालिनः ।
तेभ्यः क्रियाः पराः श्रेष्ठास्तेभ्योऽप्यध्यात्मवित्तमाः ॥

न विद्यया केवलया तपसा वाऽपि पात्रता ।
यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितम् ॥

वसिष्ठः

स्वाध्यायाढ्यं योनिमन्तं प्रशान्तं
वैतानस्थं पापभीरुं बहुज्ञम् ।
स्त्रीषु क्षान्तं धार्मिकं गोशरण्यं
व्रतैः क्लान्तं तादृशं पात्रमाहुः ॥

'योनिमान्' प्रशस्तकुलोद्भवः । 'वैतानास्थः' अग्निहो-

1 A. S. B. and I. O., पात्रापात्रलक्षणम्

2 I. O., तत्र इति नास्ति

3 A. S. B and I. O., संकथनात् ; Udaipur Ms. has सुकथनात्

आदिकर्मपरः। 'स्त्रीषु क्षान्तः' स्त्रीविषये [1]संयतः। 'गोशरण्यः गोषु शुश्रूषारतः'।

तथा

ये ऽक्षान्तदान्ताः श्रुतपूर्णकर्णाः
जितेन्द्रियाः प्राणिवधे निवृत्ताः।
प्रतिग्रहे सङ्कुचिताग्रहस्ता-
स्ते ब्राह्मणास्तारयितुं समर्थाः॥

यमः

विद्यायुक्तो धर्मशीलः प्रशान्तः
क्षान्तो दान्तः सत्यवादी कृतज्ञः।
वृत्तिग्लानो गोहितो गोशरण्यो
दाता यच्च [2]ब्राह्मणः पात्रमाहुः॥
स्वाध्यायविन्नियमवांस्तपस्वी[3] ध्यानवित्तमः।
क्षान्तो दान्तः सत्यवादी विप्रः पात्रमिहोच्यते॥
विद्यावन्तश्च ये विप्राः [4]सुवृत्ताश्च तपस्विनः।
सत्यसंयमसंयुक्ताः [5]शान्तिमन्तो जितेन्द्रियाः॥
पुनन्ति[6] दर्शनं प्राप्ताः किं पुनः सङ्गतिं गताः।

1 A. S. B., शान्तः for संयतः
2 I. O., दाता यज्वा
3 I. O., स्वाध्यायवान् .
4 A. S. B., सव्रताश्च
5 I. O., ध्यानयुक्ताः
6 A. S. B., पुनर्निदर्शनं प्राप्ताः

तेषां [1]दत्वा च भुक्त्वा च प्राप्नुयुः परमां गतिम् ॥
दत्वा द्विजाय शुद्धाय दाता याति शुभां गतिम् ।
विद्यातपःशीलवांश्च सन्तारयति नेतरः ॥
वेदेषु[2] च समिद्धेषु हुतं विप्रमुखादिषु ।
सन्तारयति दातारं महतः किं [3]द्विषादपि ॥

महाभारते

साङ्गांश्च चतुरो वेदान् योऽधीते [4]च द्विजर्षभः ।
षड्भ्योऽनिवृत्तः कर्मभ्यः [5]सत्पात्रमृषयो विदुः ॥
'षड्भ्योऽनिवृत्तः' अध्ययनादिषट्कर्मनिरतः ।

वसिष्ठः

किञ्चिद्वेदमयं पात्रं किञ्चित्पात्रं तपोमयम् ।
पात्राणामपि तत्पात्रं शूद्रान्नं यस्य नोदरे ॥

सम्वर्त्तः

श्रोत्रियाय दरिद्राय अर्थिने च विशेषतः ।
यद्दानं दीयते तस्मै तद्दानं[6] शुभकर्मणि ॥

1 A. S. B. and I. O., दत्वा च भुक्त्वा, but Udaipur Ms. reads wrongly च दत्वा वितत्काच.

2 I. O., वेदेन्धनसमिद्धेषु ; A. S. B., वेदेषु च समृद्धेषु

3 I. O., किल्बिषादपि

4 A. S. B., वै for च

5 I. O., तं पात्रं

6 A. S. B. and I. O., शुभकारकम्

व्यासः

किञ्चिद्वेदमयं पात्रं किञ्चित्पात्रं तपोमयम् ।
असङ्कीर्णं च यत्पात्रं तत्पात्रं तारयिष्यति ॥

'असङ्कीर्णं च' योन्यादिसङ्करदोषरहितम् ।

तथा शातातपो[1] दानवर्षप्रथमे

वेदपूर्णमुखं विप्रं [2]प्रभुक्तमपि भोजयेत् ।
अनन्तर्षं[3] निराहारं षड्रात्रमुपवासिनम् ॥
दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणाश्च विशेषतः ।
अयातयामान्येतानि[4] नियोज्यानि पुनः पुनः ॥

दाने व्यासः

एकोऽपि[5] वेदविद् भुङ्क्ते षट्कर्मनिरतः शुचिः ।
दातुः फलमसंख्येयं जन्म जन्म तदक्षयम् ॥

शातातपव्यासौ

वेदविद्याव्रतस्नाते श्रोत्रिये गृहमागते ।
क्रीडन्त्योषधयः सर्वाः यास्यामः परमां गतिम् ॥

'ओषधयः' अत्राऽन्नानि ।

1 A. S. B., दानव्यासप्रथमे ; I. O., दानाध्याय
2 A. S. B., स्वभुक्तं ; I. O., सुभुक्तं
3 A. S. B., न तु मूर्खं ; I. O., न तु शून्यं
4 I. O., अयते याममात्राणि
5 A. S. B. and I. O., यत्सिक्थं

यमः

अहिंसानिरतो नित्यं जुह्वानो जातवेदसम् ।
स्वाध्यायनिरतो[1] दाता स वै ब्राह्मण उच्यते ॥
श्रुतं प्रज्ञानुगं यस्य प्रज्ञा चैव श्रुतानुगा ।
असंभिन्नार्थमर्यादः स वै ब्राह्मण उच्यते ॥
ॐकारपूर्विकास्तिस्रः सावित्रीर्यश्च [2]वीक्षते ।
चरितब्रह्मचर्यश्च[3] स वै श्रोत्रिय उच्यते ॥
आशिषोऽप्यर्थपूजां च प्रसङ्गं न करोति यः ।
निवृत्तं[4] लोभमोहाभ्यां तं देवा ब्राह्मणं विदुः ॥
सत्यं दानं क्षमा शीलमानृशंस्यं दया घृणा ।
दृश्यन्ते यत्र लोकेऽस्मिंस्तं देवा ब्राह्मणं विदुः ॥

'तिस्रो' महाव्याहृतीरिति शेषः। 'आशिषः' आशीर्वादान् । अर्थार्थं धनलाभाय 'पूजा' फलपुष्पादिदानेन । 'प्रसङ्गः' अत्यासक्तिः ।

देवलः

मात्रश्च ब्राह्मणश्चैव श्रोत्रियश्च ततः परः ।
अनूचानस्तथा भ्रूण ऋषिकल्प ऋषिर्मुनिः ॥
इत्येतेऽष्टौ समुद्दिष्टा ब्राह्मणाः प्रथमं श्रुतौ ।
तेषां परः परः श्रेष्ठो विद्यावृत्तविशेषतः ॥

1 A. S. B. and I. O., स्वदारनिरतः
2 I. O., and A S. B., विन्दति
3 I. O., ब्रह्मचर्यं च
4 A. S. B., निवृत्तो

ब्राह्मणानां कुले जातो जातिमात्रो यदा भवेत् ।
अनुपेतः क्रियाहीनो मात्र इत्याभिधीयते ॥

एकदेशमतिक्रम्य वेदस्याऽऽचारवानृजुः[1] ।
स ब्राह्मण इति प्रोक्तो निर्भृतः सत्यवाक् घृणी ॥

एकां शाखां सकल्पां वा [2]षड्भिर्योगैरधीत्य वा ।
षट्कर्मनिरतो विप्रः श्रोत्रियो नाम धर्मवित्[3] ॥

वेदवेदाङ्गतत्वज्ञः शुद्धात्मा पापवर्जितः ।
शेषं श्रोत्रियवत् प्रोक्तः सोऽनूचान इति स्मृतः ॥

अनूचानगुणोपेतो यज्ञस्वाध्याययन्त्रितः ।
भ्रूण इत्युच्यते शिष्टैः शेषभोजी जितेन्द्रियः ॥

वैदिकं [4]लौकिकं चैव सर्वज्ञानमवाप्य यः ।
आश्रमस्थो वशी नित्यमृषिकल्प इति स्मृतः ॥

ऊर्द्ध्वरेतास्तपस्युग्रो नियताशी [5]न संशयी ।
शापानुग्रहयोः शक्तः सत्यसन्धो[6] भवेदृषिः ॥

निभृतः[7] सर्वतत्वज्ञः कामक्रोधविवर्जितः ।
ध्यानस्थो निष्क्रियो दान्तस्तुल्यमृत्काञ्चनो मुनिः ॥

एवमन्वयविद्याभ्यां वृत्तेन च समन्वितः ।

1 This śloka is wanting in A. S. B.

2 I. O., षड्भिरङ्गैः

3 A. S. B., धर्मतः for धर्मवित्

4 A. S. B., लौकिकं वैदिकम्

5 A. S. B., शीलसंशयी

6 I. O., सत्यधर्मा

7 A. S. B., निर्वृत्तः

त्रिशुक्का नाम[1] विपेन्द्राः पूज्यन्ते सवनादिषु ॥
प्रतिग्रहमसङ्ख्योऽपि कृत्वा विप्रो यथाविधि ।
निस्तारयति दातारमात्मानं च स्वतेजसा ॥

न लोके ब्राह्मणेभ्यो ऽन्यत्पवित्रं पुण्यमेव च ।
अशक्यं च द्विजेन्द्राणां नास्ति वृत्तिवतामपि[2] ॥
नियुक्तो[3] हव्यकव्येषु त्रिशुक्को[4] ब्राह्मणो द्विजैः ।
अभिभूतश्च पूर्वोक्तैर्दोषैः स्पृष्टश्च नेष्यते[5] ॥

'एकदेशातिक्रमो' वेदस्य किंचिन्न्यूनस्याऽध्ययनम् । 'निभृतः'[6] शान्तः । 'लौकिकं' अर्जनादिज्ञानम्[7] । 'निवृत्तं' निषिद्धकाम्यकर्मभ्यः। 'निष्क्रियः' अर्थार्जनादिक्रियारहितः । 'सवनादिषु' यज्ञादिषु 'अभिभूतः' अपकृष्टः । 'पूर्वोक्तैः' कुलविद्याचारैः । 'दोषैः' उपपातकादिभिः ।

वसिष्ठः

यं न सन्तं [8]न चाऽसन्तं नाऽश्रुतं न बहुश्रुतम् ।
न [9]सुवृत्तं न दुर्वृत्तं वेद कश्चित् स ब्राह्मणः ॥

1 I. O., त्रिशुक्ता नाम ; A. S. B., त्रिषुक्णा नाम
2 A. S. B., वृत्तवतामपि
3 I. O., योक्तव्यो for नियुक्तो
4 A. S. B., त्रिषुक्णो त्रिषुक्तो
5 I. O. and Udaipur Ms., नेष्यति ; A. S. B., नेष्यते
6 A. S. B., निवृत्तः
7 I. O., अर्थादिज्ञानम्
8 I. O., न वा सन्तं
9 A. S. B., न सवृत्तं

'सन्' [1]विशिष्टाभिजनः। 'असन्' तद्विपरीतः । [2]ब्राह्मणोत्कर्षप्रकाशनं यो न करोति स पात्रमिति (तात्पर्यम्)[3] ।

यमशातातपौ

तपो धर्मो दया दानं सत्यं [4]शौचं स्वधीर्घृणा ।
विद्या[5] विज्ञानमास्तिक्यं एतद्ब्राह्मणलक्षणम् ॥

वसिष्ठः

योगः[6] क्षमा दया दानं धर्मः सत्यं श्रुतं घृणा ।
विद्या विज्ञानमास्तिक्यं एतद्ब्राह्मणलक्षणम् ॥

पैठीनसिः[7]

क्षमा दमो दया दानं धर्मस्सत्यं श्रुतिर्घृणा ।
विद्याविज्ञानमास्तिक्यं एतद्ब्राह्मणलक्षणम् ॥
दाता सद्विद्यया युक्तश्चैतद्ब्राह्मणलक्षणम् ।
कश्चित्[8] ब्रूते तपो योनिः एतद्ब्राह्मणलक्षणम् ॥

1 Udaipur Ms., reads wrongly विशेष्टोभिः यमः
2 A. S. B. and I. O., give a better reading:—तत्र एतेनात्मोत्कर्षणप्रकाशनम्
3 A. S. B. and I. O., add तात्पर्यम्
4 I. O., ज्ञानं श्रुतिः घृणा
5 A. S. B. and I. O., विद्या विनयमस्तेयम्
6 A. S. B. and I. O., योगस्तपो दया दानं सत्यं शौचं श्रुतं घृणा
7 A. S. B. and I. O., अधिकपाठोऽयम्
8 A. S. B. and I. O., supply this line which is missing in Udaipur Ms.

विद्यातपोभ्यां यो हीनो जातिब्राह्मण एव सः ।
केचित्[1] विद्वानविद्वांश्च [2]ब्राह्मणो मेध्य एव सः ॥
परं [3]दैवतमपि च तत् ।

वसिष्ठो यमश्च

द्वितीयश्चैके । [4]अश्रोत्रिया अननूचाना अनग्नयः शूद्रधर्माणो भवन्ति । मानवं चाऽत्र श्लोकमुदाहरन्ति ।

न[5] मृषा ब्राह्मणः क्रियाकृत्वः शीलो न दाम्भिकः ।
न [6]शूद्रप्रेषणं कुर्य्यात् न स्तेनो न चिकित्सकः ॥
अब्राह्मणोऽनधीयानो भैक्षमात्रं चरेद्द्विजः[7] ।
तं ग्रामं दण्डयेद् राजा [8]चौरवृत्तिप्रदो हि सः ॥

शातातपः

अब्राह्मणास्तु षट्प्रोक्ता ऋषिः शातातपोऽब्रवीत् ।
आद्यो राजव्रतस्तेषां द्वितीयः क्रयविक्रयी ॥
तृतीयो बहुयाज्यश्च चतुर्थो ग्रामयाजकः ।

1 A. S. B. and I. O., क्वचित्
2 I. O., ब्राह्मणो मेध्यमानवः
3 A. S. B. and I. O., दैवतमग्निवत्
4 I. O., अश्रोत्रियान् अननुवाक्यान्
5 I. O., नाऽन्यः ब्राह्मणो भवति न कुशीलवः; A. S. B., नाऽनृक् ब्राह्मणो न वणिक् न कुशीलवः
6 I. O., न शूद्रप्रेषणं कुर्वन्
7 I. O. and A. S. B., अव्रता ह्यनधीयाना यत्र भैक्षचरा द्विजाः
8 I. O., चौरभक्तप्रदो

पञ्चमस्त्वधिभूस्तेषां[1] ग्रामस्य नगरस्य च ॥
अनागतस्तथा पूर्वां[2] सादित्यां चैव पश्चिमाम् ।
नोपासीत द्विजः सन्ध्यां स [3]षष्ठोऽब्राह्मणः [4]स्मृतः ॥

'बहुयाज्यो' बह्वो याज्या यस्य। 'भृतो' ग्रामस्य नगरस्येत्यन्वयः[5] ।

वसिष्ठः[6]

उदक्यान्वासते येषां [7]ये च केचन मानवाः ।
कुलं वा श्रोत्रियं येषां सर्वे ते शूद्रधर्मिणः ॥
'अन्वासते'[8] कर्मकाले समीप एव तिष्ठन्ते ।

मनुः[9]

गोरक्षकान् वाणिजकान् तथा कारुकुशीलवान् ।
प्रैष्यान् वार्द्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत् ॥
ये व्यपेताः[10] स्वकर्मभ्यः परपिण्डोपजीविनः ।

1 I. O. and A. S. B., पञ्चमस्तु भृतस्तेषां, which accords better with the explanation below.

2 I. O. and A. S. B., अनागतां तु यः पूर्वां

3 I. O., शस्तो for षष्ठः

4 I. O., मतः for स्मृतः

5 I. O., इत्यन्वयः; the reading अन्नयः in Udaipur Ms. is obviously wrong.

6 I. O.

7 I. O. and A. S. B. ये च केचिदनग्नयः

8 Udaipur Ms., अध्यासते

9 I. O. and A. S. B.

10 Udaipur Ms., यो यजेत.

द्विजत्वमभिकाङ्क्षन्ति[1] तान् वै शूद्रवदाचरेत् ॥

अथ मनुः

पात्रस्य हि विशेषेण [2]श्रद्दधानास्त एव च ।
अल्पं वा बहु वा प्रेत्य दानस्य [3]प्राप्यते फलम् ॥

दक्षः

शतं[4] द्विगुणसाहस्रं अनन्तञ्च यथाक्रमम् ।
दाने फलविशेषस्स्यादित्येषामेवमेव[5] हि ॥

मनुदक्षव्यासाः

सममब्राह्मणे दानं [6]द्विगुणं ब्राह्मणब्रुवे ।
सहस्रगुणमाचार्ये[7] अनन्तं वेदपारगे ॥
'अब्राह्मणो' राजभृत्यादिषड्विधः शातातपोक्तः ।

यमः

सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे[8] ।
प्राधीते शतसहस्रमनन्तं वेदपारगे ॥

1 A. S. B. and I. O., अनुकुर्वन्ति
2 I. O., श्रद्दधानतयैव च.
3 I. O., फलमश्नुते
4 A. S. B., समद्विगुणसाहस्रं; I. O., समं द्विगुण०
5 A. S. B. and I. O., विद्यायामेवमेव हि
6 Udaipur Ms. and I. O., सगुणं for द्विगुणं
7 I. O. substitutes for the line प्राधीते इति साहस्रमनन्तं वेदपारगे. This is noted in A. S. B. as a variant.
8 I. O. and A. S. B., omit the śloka.

'प्राधीतः' प्रारब्धाध्ययनः ।

बृहस्पतिः

शूद्रे समगुणं दानं वैश्ये तद्द्विगुणं स्मृतम् ।
क्षत्रिये त्रिगुणं प्राहुरनन्तं[1] ब्राह्मणे स्मृतम् ॥
श्रोत्रिये चैव साहस्रं आचार्ये द्विगुणं ततः ।
आत्मज्ञे शतसाहस्रमनन्तं त्वग्निहोत्रिणि ॥

यमः

शूद्रे समगुणं दानं वैश्ये त्रिगुणमुच्यते ।
षड्गुणं क्षत्रिये प्राहुर्विप्रे दशगुणं स्मृतम्[2] ॥

दक्षः

व्यसनार्तस्य[3] रक्षार्थं ब्राह्मणार्थं च याचतः ।
एवमन्विष्य दातव्यं सर्वदानेष्वयं विधिः ॥
मातापितृविहीनं तु संस्कारैः [4]ब्राह्मणादिभिः ।
यस्स्थापयति तस्येह पुण्यसंख्या न विद्यते ॥
न[5] तपो ह्यग्निहोत्रेण नाऽग्निष्टोमेन लभ्यते ।
यच्छ्रेयः[6] प्राप्यते पुंसा विप्रेण स्थापितेन वै ॥
'व्यसनं' राजचौराद्युपद्रवः । 'आपत्' दुर्भिक्षाद्यु-

1 A. S. B., षड्गुणं ब्राह्मणे स्मृतम्
2 I. O., पुनः for स्मृतम्
3 A. S. B. and I. O., व्यसनापद्गणार्थं च कुटुम्बार्थं च याचते
4 A. S. B. and I. O., उद्वहनादिभिः
5 A. S. B. and I. O., न तच्छ्रुयोऽग्निहोत्रेण
6 Supplied by A. S. B. and I. O.

पद्रवः। आद्योऽर्थशब्दोऽत्र निवृत्तिहेतुवचनः।

मनुः

सान्तानिकं यक्ष्यमाणमध्वगं सार्ववेदसम्।
गुर्वर्थं पितृमात्रर्थं स्वाध्यायार्थ्युपतापिनः॥
नवैतान् स्नातकान् विद्याद्ब्राह्मणान् धर्मभिक्षुकान्।
निःस्वेभ्यो देयमेतेभ्यो दानं विद्याविशेषतः॥
एतेभ्यो हि द्विजाग्र्येभ्यो देयमन्नं सदक्षिणम्।
इतरेभ्यो बहिर्वेदि कृतान्नं तु विधीयते॥

'सान्तानिकः' सन्तानप्रयोजनविवाहार्थी। 'अध्वगः' अत्र क्षीणपाथेयः। 'सार्ववेदसः' सर्वस्वदक्षिणयज्ञकृत्। 'उपतापी' व्याधिपीडितः। 'विद्याविशेषत' इति, अल्पविद्यायाऽल्पं, बहुविद्याय बह्वित्यर्थः।

गौतमः

गुर्वर्थनिवेशौषधार्थवृत्तिक्षीणयक्ष्यमाणाध्ययनाध्वसंयोगवैश्वजितेषु द्रव्यसंविभागो बहिर्वेदि भिक्षमाणेषु कृतान्नमितरेषु[1]।

'निवेशो'[2] विवाहः। 'वैश्वजितः' सर्वस्वदक्षिणायै कृतविश्वजिद्यागः। 'बहिर्वेदि' ग्रहणात्[3] एतेभ्यो बहि-

1 A. S. B., कृतान्नमितरेभ्यः; citation corrupt in Mss; corrected.

2 A. S. B., निवेशो विवाहः; Udaipur Ms. reads wrongly विशेषो, not found in the quotation.

3 I. O. and A. S. B., ग्रहणात् Udaipur Ms. बहिर्वेदग्रहाय

वेद्यपि धनमवश्यं देयम् । अन्येभ्यस्तु [1]अन्तर्वेद्येव धनधान्यनियमः । बहिर्वेदि तु कृतान्नस्यैव ।

बौधायनः

[2]स्वब्राह्मणश्रोत्रियवेदपारगेभ्यः गुर्वर्थनिवेशौषधार्थवृत्तिक्षीणयक्ष्यमाणाध्ययनाध्वसंयोगवैश्वजितेषु द्रव्यसंविभागो यथाशक्ति कार्यो बहिर्वेदि भिक्षमाणेषु कृत्तान्नमितरेषु ।

आपस्तम्बः

भिक्षणे निमित्तमाचार्यो विवाहो यज्ञो मातापित्रोर्बुभूर्षाऽर्हतश्च नियमविलोपः । तत्र गुणान् समीक्ष्य यथाशक्ति देयम् । इन्द्रियप्रीत्यर्थं तु भिक्षणमनिमित्तं न तदाद्रियेत ।

'बुभूर्षा'[3] भरणेच्छा । अर्हतश्च नियमविलोपः । अधिकारिणामावश्यककर्मविलोपप्रसङ्गः ।

विष्णुः

पुरोहितस्त्वात्मन एव पात्रम्[4] ।

यस्यैते पुरोहितादयः तस्यैव तेऽन्यगुणरहिता अपि पुरोहितादित्वेनैव पात्राणि ।

1 A. S. B. and I. O., अन्तर्वेद्येव धनधान्यनियमः; Udaipur Ms. reads wrongly अज्ञान्नायैव

2 I. O., सुब्राह्मण

3 I. O., interpolates पुरुषभिक्षेयम्

4 A. S. B., interpolates पुरोहित-स्वदुहितृपुत्रजामातरश्च

दाने व्यासः

मातापितृषु यद्दत्तं भ्रातृषु स्वसुतासु च ।
जायात्मजेषु[1] यद्दत्तं सोऽनिन्दस्वर्गसंक्रमः ॥
पितुः शतगुणं दानं सहस्रं मातुरुच्यते ।
अनन्तं दुहितुर्दानं सोदर्ये दत्तमक्षयम् ॥

'मातापितृषु यद्दत्तमि'त्यादीनामयमर्थः–यत् प्रातिस्विकं विद्याधनादि[2] तद्दत्तं विशिष्टफलमित्यर्थः ।

दक्षः

मातापित्रोर्गुरौ मित्रे विनीते चोपकारिणे ।
दीनानाथविशिष्टेभ्यो दातव्यं भूतिमिच्छता[3] ॥
अदत्तदाना जायन्ते परभाग्योपजीविनः ।

'उपकारिणि' परोपकारपरे । 'विनीतः' सुशिक्षितः । 'विशिष्टो' गुणातिशयेन । परभाग्योपजीवशीलिनः ।

संवर्त्तः

दानान्येतानि देयानि तथान्यानि च सर्वशः ।
दीनान्धकृपणार्थिभ्यः श्रेयःकामेन धीमता ॥

विष्णुः

न दानं यशसे [ दद्यात् ] न भयान्नोपकारिणे ।
न नृत्यगीतशीलेभ्यो धर्मोऽयमिति निश्चयः ॥

1 I. O., जायापत्योस्तु
2 Udaipur Ms., विद्याबलादि
3 I. O. and A. S. B., दत्तं तु सफलं भवेत्

'उपकारिणे' आत्मोपकारकाय प्रत्युपकारसमीहयेत्यर्थः। तथा तद्धनानि राजा गृह्णीयात्।

महाभारते

तद्भक्तास्तद्धना राजन् तद्गृहास्तद्व्यपाश्रयाः।
अर्थिनश्च भवन्त्यर्थे तेषु दत्तं महाफलम्॥
हृतसर्वस्वहरणा निर्दोषाः प्रभविष्णुभिः।
स्पृहयन्ति स्वभक्तानां तेषु दत्तं महाफलम्॥
हृतस्वा हृतदाराश्च ये विप्रा देशविप्लवे।
अर्थार्थमभिगच्छन्ति तेभ्यो दत्तं महत्फलम्॥
तपस्विनस्तपोनिष्ठास्तथा भैक्षचराश्च ये।
अर्थिनः किञ्चिदिच्छन्ति तेषां दत्तं महत्फलम्॥

'तद्भक्ताः'[1] तदेव दीयमानं भक्तं अदनीयं येषां ते तथा। एवं तद्धनादिशब्दा अपि। 'स्वभक्तानां' स्वदत्तानाम्।

अथ शातातपपराशरौ

सन्निकृष्टमधीयानं ब्राह्मणं योऽप्यतिक्रमेत्।
भोजने चैव दाने च दहत्यासप्तमं कुलम्॥

वसिष्ठव्यासशातातपपराशराः, बौधायनश्च द्वितीये

यस्य त्वेकगृहे मूर्खो दूरे चापि बहुश्रुतः।
बहुश्रुताय दातव्यं [2]न मूर्खस्य व्यतिक्रमः॥

1 A. S. B. and I. O., तद्भक्ताः; Udaipur Ms. reads wrongly तदुक्तं

2 A. S. B. and I. O., नास्ति मूर्खे

ब्राह्मणातिक्रमो नास्ति विप्रे वेदविवर्जिते ।
ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते ॥

वसिष्ठः

यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः ।
यश्च विप्रोऽनधीयानस्त्रयस्ते नामधारकाः ॥
विद्वद्भोज्यमविद्वांसो येषु राष्ट्रेषु भुञ्जते ।
तान्यनावृष्टिमिच्छन्ति सहसा[1] जायते भयम् ॥

यमः

राजधानी यथा शून्या यथा कूपश्च निर्जलः ।
यथा हुतमनग्नौ वा तथा दत्तं द्विजे नरे[2] ॥

भविष्यपुराणे

यस्त्वासन्नमतिक्रम्य ब्राह्मणं पतिताद्दते ।
दूरस्थं भोजयेत् मूढो गुणाढ्यं नरकं व्रजेत् ॥
तस्मान्नाऽतिक्रमेत् प्राज्ञो ब्राह्मणान् प्रातिवेशिकान् ।
सम्बन्धिनस्तथा सर्वान् [3]दौहित्रमतिथिं तथा ॥
भागिनेयं विशेषेण तथा बन्धून् गृहाधिपः ।
नाऽतिक्रामेन्नरस्त्वैतान्मूर्खानपि[4] च गोपते ॥

1 A. S. B. and I. O., महद्वा .
2 A. S. B., अनृते; I. O., अनृचे
3 A. S. B. and I. O., दौहित्रं विट्पतिं तथा
4 I. O., सुमूर्खानपि

अतिक्रम्य महारौद्रं रौरवं नरकं व्रजेत् ।

ब्राह्मणोऽत्राल्पविद्यः । [1]मूर्खस्याऽतिक्रमे दोषाभावस्य 'नाऽमूर्खेऽव्यतिक्रम' इति व्यासादिभिरनभिधानात्। 'मूर्खा-नि'ति सम्बन्धिदौहित्रादीनामेव विशेषणम् ।

मनुः

पात्रभूतो हि यो विप्रः प्रतिगृह्य प्रतिग्रहम् ।
असत्सु[2] विनियुञ्जीत तस्मै देयं न किञ्चन ॥
सञ्चयं[3] कुरुते यश्च प्रतिगृह्य समन्ततः ।
धर्मार्थं नोपयुंक्ते यो न तं हि सुखमानयेत् ॥

'असत्सु' निषिद्धेषु द्यूतादिषु ।

दक्षः

विधिहीने तथा पात्रे यो ददाति प्रतिग्रहम् ।
न केवलं हि तद्याति शेषमप्यत्र नश्यति[4] ॥

1 Udaipur text corrupt; text follows A. S. B. and I. O. generally; but A. S. B. has व्यासादिभिः विधानात् instead of व्यासादिभिरनभिधानात्

2 A. S. B. and I. O., असत्सु विनियुञ्जीत; Udaipur Ms. reads wrongly असत्स्वपि न युञ्जीत

3 A. S. B., अर्थं सञ्चयते यश्च प्रतिगृह्य समन्ततः ।
धर्मार्थं नोपयुङ्क्ते च न तं तस्करमर्चयेत् ।
असत्सु निषिद्धेषु द्यूतादिषु । An alternative reading in I. O. for the last clause is न तं तक्षणमर्चयेत्

4 A. S. B., न केवलं हि तद्व्यर्थं शेषमप्यस्य नश्यति ।

यमः

अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् ।
नैषां प्रतिग्रहो देयो न शिला तारयेच्छिलाम् ॥
अपविद्धाग्निहोत्रस्य गुरोर्विप्रियकारिणः ।
द्रविणं तैर्न[1] दातव्यं सततं पापकर्मणः ॥
न प्रतिग्रहमर्हन्ति वृषलाध्यापका द्विजाः ।
शूद्रस्याऽध्यापनाद्विप्रः पतत्यत्र न संशयः ॥

अत्र च व्रतमन्त्ररहितानां दाननिषेधो मन्त्रवद्गवादिदानविशेषविषयः ।

"मन्त्रपूर्णं[2] च यद्दानं अपात्राय प्रदीयते ।
दातुर्निकृन्तते हस्तं भोक्तुर्जिह्वां निकृन्तति" ॥

इति शातातपवचनात् ।

"उपप्लवन्ति[3] दातारं गौरश्वः काञ्चनं क्षितिः ।
अश्रोत्रियस्य विप्रस्य हस्तं दृष्ट्वा निराकृतेः" ॥

इति [4]वसिष्ठवचनात् पुनः सद्विप्रविषयः, न पुनर्दानमात्रविषयः। अब्राह्मणब्राह्मणब्रुवादीनां दानमात्रस्य "सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे" इत्यादिवाक्यैर्दर्शितत्वात् ।

1 I. O., नैव for तैर्न
2 I. O., मन्त्रपूर्वं
3 A. S. B. and I. O., उपरुन्धन्ति
4 I. O., वसिष्ठवचनाच्च न धनदानमात्रविषयः

व्यासः शातातपश्च प्रथमे

नष्टशौचे व्रतभ्रष्टे विप्रे वेदविवर्जिते ।
रोदित्यन्नं दीयमानं किं मया दुष्कृतं कृतम् ॥
शौचहीनाश्च ये विप्रा न च यज्ञोपवीतिनः ।
हुतं दत्तं तपस्तेषां नश्यत्यत्र न संशयः ॥
ऊषरे वापितं बीजं यच्च भस्मनि हूयते ।
क्रियाहीनेषु यद्दत्तं [1]वित्तनाशो विधीयते ॥
प्रस्तरे पतितं बीजं भिन्नभाण्डे च दोहनम् ।
भस्मन्यपि हुतं द्रव्यं [2]तद्वद्दानमसाधुषु ॥

यमः

यस्तु[3] लिङ्गच्युतां वृत्तिमलिङ्गेभ्यः प्रयच्छति ।
घोरायां भ्रूणहत्यायां पच्यते नाऽत्र संशयः ॥

मनुर्विष्णुश्च प्रथमे

न वार्यपि प्रयच्छेत बैडालव्रतिके द्विजे ।
न[4] बकव्रतिके पापे नाऽवेदविदि धर्मवित्[5] ॥
शिष्टेष्वेतेषु[6] दत्तं हि विधिनोपार्जितं धनम् ।

1 A. S. B. and I. O., त्रिषु
2 Udaipur Ms. reads तत्वज्ञानं समाप्तिषु
3 A. S. B., यस्तु लिङ्ग्युचितां वृत्तिमलिङ्गिभ्यः प्रयच्छति ;
I. O., यस्तु निकुञ्चितां वृत्तिं लिंगेभ्यः सम्प्रयच्छति
4 A. S. B. and I. O., नरकप्रतिके पापे
5 A. S. B., कर्मवित्
6 A. S. B., त्रिष्वपि

दातुर्भवत्यनर्थाय परत्राऽऽदातुरेव च ॥
यथा प्लवेनौपलेन निमज्जत्युदके नरः ।
दातृप्रतिग्रहीतारौ [1]तथैवाऽज्ञौ निमज्जतः ॥

मनुर्विष्णुश्च[2]

धर्मवर्जी सदा लुब्धः छाद्मिको लोकदाम्भिकः ।
बैडालव्रतिको ज्ञेयो हिंस्रः सर्वाभिसन्धकः ॥
यस्य धर्मध्वजो नित्यं [3]स्वर्गध्वज इवोच्छ्रितः ।
प्रच्छन्नानि च पापानि बैडालं नाम तद्व्रतम् ॥
अल्पदृष्टिर्निष्कृतिकः[4] स्वार्थसाधनतत्परः ।
शठो मिथ्याविनीतश्च [5]बकवृत्तिधरो द्विजः ॥
ये बकव्रतिनो विप्रा ये च मार्जारलिङ्गिनः ।
ते पतन्त्यन्धतामिस्रे तेन पापेन कर्मणा ॥

यमः

यः कारणं पुरस्कृत्य व्रतचर्यां निषेवते ।
पापं[6] व्रतेन प्रच्छाद्य बैडालं नाम तद्व्रतम् ॥
अर्थं च विपुलं गृह्यं दत्वा लिङ्गं विवर्जयेत् ।

1 Udaipur Ms., तथा राज्ञः
2 A. S. B. and I. O., द्वितीयवर्जम्
3 A. S. B., सुराध्वज
4 A. S. B. and I. O., अधोदृष्टिः नैकृतिकः
5 A. S. B., बकव्रतपरो ; I. O., बकव्रतचरो
6 A. S. B. and I. O.

आश्रमान्तरितं वक्ष्ये[1] बैडालं नाम तद्व्रतम् ॥
प्रतिगृह्याऽऽश्रमं यस्तु स्थित्वा तत्र न तिष्ठति ।
आश्रमस्य विलोपेन बैडालं नाम तद्व्रतम् ॥
दत्त्वोदकेन कन्यां तु कृत्वा चैव प्रतिग्रहम् ।
कृतार्थो नार्थवान् यश्च बैडालं नाम तद्व्रतम् ।
यतीनामाश्रमं [2]मत्वा प्रणमेत हि यः पुनः ।
यतिधर्मविलोपेन बैडालं नाम तद्व्रतम् ॥

दाने व्यासः

ब्रह्मवीर्यसमुत्पन्नो[3] मन्त्रसंस्कारवर्जितः ।
जातिमात्रोपजीवी तु न [4]भवेद्ब्राह्मणः स तु ॥
गर्भाधानादिभिर्मुक्तः[5] तथोपनयनेन च ।
न कर्मकृन्न चाऽधीते[6] स भवेद्ब्राह्मणब्रुवः ॥

स्मृतिः

अव्रतौ वैश्यराजन्यौ शूद्रश्चाऽब्राह्मणास्त्रयः ।
वेदव्रतविहीनश्च ब्राह्मणो ब्राह्मणब्रुवः[7] ॥

1 I. O., रक्षेत् for वक्ष्ये
2 I. O., गत्वा प्रविशेत and प्रत्यागमेत्तु
3 A. S. B., ब्रह्मबीजसमुत्पन्नो
4 A. S. B., भवेदब्राह्मणः स तु
5 Udaipur Ms., युक्त for मुक्त
6 Udaipur Ms. reads न कर्मकृत् सुधीते
7 I. O. omits this half verse.

यमः[1]

यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम् ।
स वै दुर्ब्राह्मणो ज्ञेयो यश्चैव वृषलीपतिः ॥

दक्षः

धूर्त्ते बन्दिनि [2]मत्ते च कुवैद्ये कितवे शठे ।
भाटचारणचौरेभ्यः[3] दत्तं भवति निष्फलम् ॥

महाभारते

पङ्ग्वन्धबाधिरा मूका व्याधिनोपहताश्च ये ।
भर्त्तव्यास्ते महाराज न तु देयः प्रतिग्रहः ॥

इति [4]भट्टहृदयधरात्मजमहासान्धिविग्रहिकभट्टश्रीलक्ष्मीधरविरचिते कृत्यकल्पतरौ दानकाण्डे पात्रापात्रनिरूपणपर्व्व ॥

1 I. O. cites यमः here.

2 A. S. B. and I. O., मल्ले, and कुवैद्ये; Udaipur Ms. reads क्रूरेत्ये

3 A. S. B. and I. O., चाटचारण

4 I. O. and A. S. B.

४

# अथ महादानानि

तत्र मत्स्यपुराणे[1]

अथाऽतः सम्प्रवक्ष्यामि महादानानुकीर्त्तनम् ।
दानधर्मेऽपि [2]यत्प्रोक्तं विष्णुना प्रभविष्णुना ॥
सर्वपापक्षयकरं नृणां दुस्स्वप्ननाशनम् ।
यत्तु षोडशधा प्रोक्तं वासुदेवेन भूतले ॥
पुण्यं पवित्रमायुष्यं सर्वपापहरं शुभम् ।
पूजितं देवताभिश्च ब्रह्मविष्णुशिवादिभिः ॥
आद्यं तु सर्वदानानां तुलापुरुषसंज्ञकम्[3] ।
हिरण्यगर्भदानं च ब्रह्माण्डं तदनन्तरम् ॥
कल्पपादपदानं च गोसहस्रं तु पञ्चमम् ।
हिरण्यकामधेनुश्च हिरण्याश्वस्तथैव च ।
हिरण्याश्वरथस्तद्वद्धेमहस्तिरथस्तथा ॥
पञ्चलाङ्गलकं तद्वद्धरादानं तथैव च ।
द्वादशं विश्वचक्रं च[4] ततः कल्पलतात्मकम् ॥
सप्तसागरदानं च रत्नधेनुस्तथैव च ।
महाभूतघटस्तद्वत् षोडशः परिकीर्तितः ॥

1 Ānandāśrama edn., 1907, p. 557
2 A. S. B., यन्नोक्तम्
3 A. S. B. and I. O., संज्ञितम्
4 त for च in printed मत्स्यपुराण

तथा[1]

यस्माद्विघ्नसहस्रेण महादानानि सर्वदा ।
रक्षन्ति देवताः सर्वा एकैकमपि भूतले ॥
एषामन्यतमं कुर्याद्वासुदेवप्रसादतः ।
न शक्यमन्यथा कर्त्तुमपि शक्रेण[2] भूतले ॥
तस्मादाराध्य गोविन्दमुमापतिविनायकौ ।
महादानमखं कुर्याद्विप्रैश्चैवाऽनुमोदितः ॥

तथा

अयने विषुवे पुण्ये व्यतीपाते दिनक्षये ।
युगादिषूपरागेषु तथा मन्वन्तरादिषु ॥
संक्रान्तौ वैधृतिदिने चतुर्दश्यष्टमीषु च ।
सितपञ्चदशी [3]सर्वा द्वादशीष्वष्टकासु च ॥
यात्रोत्सवविवाहेषु[4] दुस्स्वप्नेऽद्भुतदर्शने ।
द्रव्यब्राह्मणलाभे च श्रद्धा वा यत्र जायते ॥
तीर्थे चाऽऽयतने गोष्ठे कूपारामसरित्सु वा[5] ।
गृहे वाऽथ वने वाऽपि तडागे रुचिरे तथा ॥
महादानानि देयानि संसारभयभीरुणा ।

1 Omitted by I. O.

2 A. S. B. and I. O., शक्रेण ; Udaipur Ms. has शूलेन, perhaps for शूलिना. The printed book confirms शक्रेण

3 मत्स्य. पु. p. 558 has पर्व for सर्वा

4 A. S. B. and I. O., यज्ञोत्सव so also printed text.

5 I. O., च for वा

अनित्यं जीवितं[1] यस्माद्वसु चाऽतीव चञ्चलम् ॥
केशेष्विव गृहीतस्तु मृत्युना धर्ममाचरेत् ।

## तत्र तुलापुरुषदानविधिः (१)

पुण्यादितिथिमासाद्य[2] कृत्वा ब्राह्मणवाचनम् ॥
षोडशारत्निमात्रं[3] तु दश द्वादश वा करान् ।
मण्डपं कारयेद् [4]विद्वान् चतुर्भद्राननं बुधः ॥

'कृत्वा ब्राह्मणवाचनं' ब्राह्मणान् पुण्याहस्वस्तिवृद्धिशब्दान् ॐकारपूर्वकान् त्रिर्वाचयित्वा, क्षत्रियादिस्तु यजमानो निरोङ्कारान् स्वस्त्यादिशब्दान् वाचयेत् ।

"पुण्याहवाचनं दैवे ब्राह्मणस्य विधीयते ।
एतदेव निरोङ्कारं [5]कुर्यात् क्षत्रियवैश्ययोः" ॥

इति यमवचनात् । 'कर'श्चात्र कफोण्युपक्रमो मध्याङ्गुल्यग्रपर्यन्तः । "मध्याङ्गुलीकूर्परयोर्मध्यप्रामाणिकः कर" इत्यङ्गुलीसंयुक्तस्मरणात् । 'चतुर्भद्राननं' चत्वारि भद्राणि[6] आननानि यस्य सः ।

1 A. S. B. and I. O., जीवितं; but Udaipur Ms. has जीवनं

2 I. O., पुण्यां तिथिमथासाद्य

3 I. O., षोडशारत्निमात्रं तु; but Udaipur Ms. has षोडशारत्नित्रिमात्रं तु

4 I. O., धीमान् चतुर्भद्रालकं बुधः

5 I. O., ब्रूयात्

6 A. S. B. and I. O., interpolate शोभनानि द्वाराणि

तथा[1]

सप्तहस्ता भवेद्वेदिः मध्ये पञ्च कराश्रया ।
तन्मध्ये तोरणं कुर्यात् सारदारुमयं शुभम् ॥
कुर्यात् कुण्डानि चत्वारि चतुर्दिक्षु विचक्षणः ।
( नमो भगवते वासुदेवायेति पूरणम्[2] )

[3]सुमेखलायोनियुतानि सम्यक्[4]
सम्पूर्णकुम्भानि महासनानि ।
सुताम्रपात्रद्वयसंयुतानि
सुयज्ञपात्राणि सुविष्टराणि ॥
हस्तप्रमाणानि तिलाज्यधूप-
पुष्पोपहाराणि सुशोभनानि ।
पूर्वोत्तरे [5]हस्तमिताऽथ वेदी
ग्रहादिदेवेश्वरपूजनाय[6] ॥

[7]'ग्रहादि' इत्यादिशब्दोपात्ताश्चैते अधिदेवता ईश्वरादयः, प्रत्यधिदेवताः अग्न्यादयो, [8]विनायकशुक्रवाय्वाका-

1 मत्स्य. पु. p. 558
2 Line omitted by A. S. B. and I. O.
3 मत्स्य. पु. p. 558 has समेखला
4 मत्स्य. पु. कुर्यात् ; A. S. B. and I. O. have तत्र
5 A. S. B. and I. O., हस्तिमिता च
6 Udaipur Ms. reads पूजनानि
7 The entire passage in Udaipur Ms. is corrupt and is restored above.
8 A. S. B. and I. O., दुर्गावाय्वा

शाश्च अश्विनौ च मत्स्यपुराणे एव ग्रहयज्ञोक्ता बोद्धव्याः ।

अर्चार्चनं[1] ब्रह्मशिवाच्युतानां
तत्रैव कार्यं फलमाल्यवस्त्रैः ।
लोकेशवर्णाः परितः पताकाः
मध्ये ध्वजः किङ्किणिकायुतस्स्यात्[2] ॥

'अर्चार्चनं' प्रतिमापूजनम् । 'तत्रैव' ग्रहवेद्याम् । 'लोकेशवर्णाः' लोकपालसवर्णाः पीतरक्तकृष्णनीलाञ्जननिभाः श्वेतकृष्णहरितशबलाः[3] । 'पताकाः' पूर्वादिदिक्षु ऐशान्यान्तासु यथासंख्यं कार्या इत्यर्थः । 'किङ्किणिका' क्षुद्रघण्टिका ।

द्वारेषु कार्याणि च तोरणानि
चत्वार्यपि क्षीरिवनस्पतीनाम्[4] ।

अश्वत्थोदुम्बरप्लक्षन्यग्रोधानां पूर्वपश्चिमदक्षिणोत्तरद्वारेषु यथाक्रमं तोरणानि कुर्यात् ।

द्वारेषु कुम्भद्वयमत्र कार्यं
स्रग्गन्धधूपाम्बररत्नयुक्तम् ।
[5]शाकेङ्गुदीचन्दनदेवदारु-
श्रीपर्णबिल्वप्रियकाञ्चनानाम्[6] ॥

1 अत्रार्चनमिति मुद्रितमत्स्यपुराणे पृष्ठे. 558

2 मत्स्य. पु. p. 558

3 I. O., सवर्णाः for शबलाः

4 मत्स्य. पु. p. 558

5 मत्स्य. पु. p. 558 *Ibid,* शालेङ्गुदी

6 *Ibid,* काञ्चनीकं the reading of I. O.

स्तम्भद्वयं हस्तयुगावखातं
कृत्वा [1]ऋजुं पञ्चकरोच्छ्रितं च[2] ।
तदन्तरं हस्तचतुष्टयं स्यात्
अथोत्तराङ्गं च तदीयमेव ॥

'श्रीपर्णी' गम्भारी । 'प्रियको' बीजपूरकः[3] । 'उत्तराङ्गं' स्तम्भद्वयोपरिकाष्ठम् । 'तदीयं' स्तम्भसजातीयं काष्ठमयम् ।

तदङ्गजातिश्च तुलाऽवलम्ब्य।[4]
हैमेन[5] मध्ये पुरुषेण युक्ता ।
दैर्घ्येण सा हस्तचतुष्टयं स्यात्
पृथुत्वमस्यास्तु[6] दशाङ्गुलानि ॥

'पुरुषेण' विष्णुना तत्प्रतिमयेत्यर्थः । 'दशाङ्गुलानी'-त्यत्र[7] अङ्गुलिमानं तु छन्दोगपरिशिष्टोक्तम्—

"अङ्गुष्ठाङ्गुलिमानं तु यत्र यत्रोपदिश्यते ।
तत्र तत्र बृहत्पर्वग्रन्थिभिर्लक्षयेत्सदा" ॥

सुवर्णपट्टाभरणा च कार्या
सलोहपाशद्वयशृङ्खलाभिः ।

1 *Ibid*, ऋढं

2 A. S. B. and I. O., but Udaipur Ms. reads कृत्वा भुजान्तश्चरणस्थितश्च

3 I. O., जीवक

4 A. S. B. and I. O., समानजातिश्च

5 I. O., हेमेन युक्ता पुरुषेण मध्ये

6 Udaipur Ms., अन्यन्तु

7 Udaipur Ms. reads. दशाङ्गुलादत्यर्थं त्र्यङ्गुलमानं

युता सुवर्णेन च रत्नमाला-
विभूषिता माल्यविलेपनाभ्याम् ॥

'सलोहपाशद्वयशृङ्खलाभि' [1]( युतेति ) सुवर्णधारणार्थं ( पुरुषधारणार्थं च ) फलकधारिणीभिर्लोहपाशद्वयावलम्बितशृङ्खलाभिर्युता कार्येत्यर्थः ।

चक्रं लिखेद्वारिजगर्भयुक्तं
नानारजोभिर्भुवि पुष्पकीर्णम्[2] ॥
वितानकं चोपरि पञ्चवर्णं
संस्थापयेत् पुष्पवने सशोभम्[3] ॥
अथर्त्विजो[4] वेदविदश्च कार्य्याः
स्वरूपवेषान्वयशीलयुक्ताः[5] ।
विधानदक्षाः पटवोऽनुकूलाः
ये चाऽऽर्यदेशप्रभवा द्विजेन्द्राः[6] ॥
गुरुश्च वेदान्तविदार्यदेश-
समुद्भवः शीलकुलाभिरूपः[7] ।
कार्यः पुराणाभिरतोऽतिदक्षः
प्रसन्नगम्भीरसरस्वतीकः ॥

1 I. O. Supplies words in brackets
2 मत्स्य. पु. p. 558
3 A. S. B. and I. O., पुष्पफलोपशोभम्
4 Udaipur Ms., अभ्यर्थिनो
5 Udaipur Ms., वेशद्वयशीलयुक्ताः
6 Udaipur Ms., द्विजेभ्यः
7 Udaipur Ms., शोभनशक्तियुक्तः

सिताम्बरः कुण्डलहेमसूत्रः
केयूरकण्ठाभरणाभिरामः ।
पूर्वेण ऋग्वेदविदौ भवेतां
यजुर्विदौ दक्षिणतश्च कार्यौ ॥
स्थाप्यौ द्विजौ सामविदौ च पश्चा-
दाथर्वणावुत्तरतश्च कार्यौ ।
विनायकादिग्रहलोकपाल-
वस्वष्टकादित्यमरुद्गणानाम्[1] ॥
ब्रह्माच्युतेशार्कवनस्पतीनां
स्वमन्त्रतो होमचतुष्टयं स्यात् ।
जप्यानि सूक्तानि तथैव चैषां
अनुक्रमेणैव यथाऽनुरूपम् ॥

'वस्वष्टके'ति वस्वष्टकशब्देन वसूनामष्टानां मिलितानां देवतात्वम् । 'स्वमन्त्रतः' स्वस्वमन्त्रवेदैः ( वेदमन्त्रैः ) । 'होमचतुष्टयमिति' वेदचतुष्टयसाध्यत्वाद्धोमानां चतुष्ट्वम् । 'जप्यानि' ऋत्विग्भिरिति शेषः । 'एषां' होमदेवानाम् ।

होमावसाने कृततूर्य्यनादो
गुरुर्गृहीत्वा बलिपुष्पधूपान् ।
आवाहयेल्लोकपतीन् क्रमेण
मन्त्रैरमीभिर्यजमानयुक्तः ॥
एह्येहि सर्वामरसिद्धसाध्यै-
रभिष्टुतो वज्रधरामरेश ।

1 Udaipur text corrupt; restored from I. O. and A. S. B.

संवीज्यमानोऽप्सरसां गणेन
रक्षाऽध्वरं नो भगवन्नमस्ते ॥

ॐ इन्द्राय नमः

एह्येहि सर्वामरहव्यवाह
मुनिप्रवीरैरभितोऽभिजुष्ट ।
तेजोबलाल्लोकगणेन[1] सार्द्धं
ममाऽध्वरं रक्ष कवे नमस्ते ॥

ॐ अग्नये नमः

एह्येहि वैवस्वत धर्मराज
सर्वामरैरर्चित [2]धर्ममूर्ते ।
शुभाशुभानन्दशुचामधीश
शिवाय[3] नः पाहि मखं नमस्ते ॥

ॐ यमाय नमः

एह्येहि रक्षोगणनायकस्त्वं
विशालवेतालपिशाचसङ्घैः ।
ममाऽध्वरं पाहि [4]शुभादिनाथ
लोकेश्वरस्त्वं भगवन्नमस्ते ॥

1 मत्स्य. पु. p. 559 तेजस्विना

2 मत्स्य. पु. p. 559 दिव्यमूर्ते

3 I. O., शुभाय

4 A. S. B. I. O. and मत्स्य. पु. p. 559 शुभादिनाथ; Udaipur Ms. has पिशाचनाथ

ॐ निर्ऋतये नमः

एह्येहि यादोगणवारिधीनां
गणेन पर्जन्य सहाऽप्सरोभिः ।
विद्याधरेन्द्रामरगीयमान
पाहि त्वमस्मान् भगवन्नमस्ते ॥

ॐ वरुणाय नमः

एह्येहि यज्ञे मम रक्षणाय
मृगाधिरूढः सहसिद्धसङ्घैः ।
प्राणाधिपः [1]कालकवेः सहाय
गृहाण पूजां भगवन्नमस्ते ॥

ॐ वायवे नमः

एह्येहि यक्षेश्वर यज्ञरक्षां[2]
विधत्स्व नक्षत्रगणेन सार्धम् ।
सर्वौषधीभिः पितृभिस्सहैव
गृहाण पूजां भगवन्नमस्ते ॥

ॐ सोमाय नमः

एह्येहि विश्वेश्वर नस्त्रिशूल-
कपालखट्वाङ्गधरेण सार्द्धम् ।
लोकेश भूतेश्वर यज्ञसिध्यै
गृहाण पूजां भगवन्नमस्ते ॥

1 मत्स्य. पु. p. 559 कालकवेः सहाय, which is A. S. B. reading.

2 Udaipur Ms. has रक्ष रक्षां

ॐ ईशानाय नमः

एह्येहि पातालधराधरेन्द्र
नागाङ्गनाकिन्नरगीयमान ।
यक्षोरगेन्द्रामरलोकसार्द्ध-
मनन्त रक्षाऽध्वरमस्मदीयम् ॥

ॐ अनन्ताय नमः

एह्येहि [1]विद्याधिपते सुरेन्द्र
लोकेन सार्द्धं पितृदेवताभिः ।
सर्वस्य धाताऽस्यमितप्रभाव
विशाऽध्वरं नः [2]सततं शिवाय ॥

ॐ ब्रह्मणे नमः ।

त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च ।
ब्रह्मविष्णुशिवैः सार्द्धं रक्षां कुर्वन्तु तानि मे ॥
देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ।
ऋषयो [3]मुनयो गावो देवमातर एव च ॥
एते ममाऽध्वरे रक्षां प्रकुर्वन्तु मुदाऽन्विताः ।
इत्यावाह्य सुरान्दद्यादृत्विग्भ्यो हेमभूषणम् ॥
कुण्डलानि च सूत्राणि हैमानि कटकानि च ।
अथाऽङ्गुलीपवित्राणि वासांसि शयनानि च ॥

1 मत्स्य. पु. p. 559 विश्वाधिपते मुनीन्द्र
2 मत्स्य. पु. p. 559 भगवन्नमस्ते
3 मत्स्य. पु. p. 559 मदनो

द्विगुणं [1]गुरवे दद्यादू भूषणाच्छादनादिकम् ।
जपेयुः शान्तिकाध्यायं जापकास्सर्वतो दिशम् ॥ इति ।

'शान्तिकाध्यायः' "शं न इन्द्राग्नी भवता"मित्यादिकः । जापकाश्चाऽष्टौ कर्त्तव्याः । मत्स्यपुराण एव तडागाद्युत्सर्गे—

अष्टौ तु जापकाः कार्या वेदवेदाङ्गपारगाः ।

इति वचनात् ।

तत्रोषिताश्च ते सर्वे कृत्वैवमधिवासनम् ॥
आदावन्ते च मध्ये च कुर्याद्ब्राह्मणवाचनम् ।
ततो मङ्गलशब्देन स्नापितो वेदपुङ्गवैः ॥
त्रिः प्रदक्षिणमावृत्य गृहीतकुसुमाञ्जलिः ।
शुक्लाम्बरधरो[2] भूत्वा तां [3]तुलामनुवर्त्तयेत् ॥
नमस्ते सर्वदेवानां शक्तिस्त्वं सत्यमाश्रिता[4] ।
साक्षीभूता जगद्धात्री निर्मिता विश्वयोनिना ॥
एकतः सर्वसत्वानि सत्यानृतशतानि च ।
धर्माधर्मकृतां मध्ये स्थापिताऽसि जगद्धिते ॥
त्वं तुले सर्वभूतानां प्रमाणमिह कीर्त्तिता ।
मां तोलयन्ती संसारादुद्धरस्व नमोऽस्तुते ॥

1 A. S. B. and I. O. as well as मत्स्य. पु. p. 559 have द्विगुणं; Udaipur alone has द्विजाय
2 A. S. B. and मत्स्य. पु. p. 560 शुक्लमाल्याम्बरो
3 A. S. B. अनुमन्त्रयेत् ; मत्स्य. पु. p. 560 अभिमन्त्रयेत्
4 A. S. B. and I. O.

योऽसौ तत्वाधिपो देवः पुरुषः पञ्चविंशकः ।
स[1] एषोऽधिष्ठितो देवि त्वयि तस्मान्नमो नमः ॥
नमो नमस्ते गोविन्द तुलापुरुषसंज्ञक ।
त्वं हरे तारयस्वाऽस्मानस्मात् संसारसागरात्[2] ॥
पुण्यं कालं समासाद्य कृत्वा चैवाऽधिवासनम् ।
पुनः प्रदक्षिणं कृत्वा तुलां तामारुहेद्बुधः[3] ॥
स चर्मकवचोपेतः[4] सर्वाभरणभूषितः ।
धर्मराजमथाऽऽदाय हैमसूत्रेण संयुतम् ॥
कराभ्यां बद्धमुष्टिभ्यामास्ते पश्यन् हरेर्मुखम्[5] ।
ततोऽपरे तुलाभागे न्यसेयुः द्विजपुङ्गवाः ॥
समादभ्यधिकं[6] यावत् काञ्चनं चाऽतिनिर्मलम् ।
पुष्टिकामस्तु कुर्वीत भूमिसंस्थं नरेश्वरः ॥
क्षणमात्रं ततः स्थित्वा पुनरेवमुदीरयेत् ।
नमस्ते सर्वभूतानां [7]शक्तिभूते सनातनि ॥
पितामहेन देवि त्वं निर्मिता परमेष्ठिना ।
त्वया धृतं जगत्सर्वं [8]बहिःस्थावरजङ्गमम् ॥

1 मत्स्य. पु. p. 560 स एको
2 *Ibid*, संसारकर्दमात्
3 *Ibid*, आरोहयेद्बुधः
4 A. S. B., I. O., and म. पु. p. 560 सखड्गचर्मकवचः
5 supplied by A. S. B. and I. O.
6 I. O., मांसस्वारकं
7 A. S. B. and मत्स्य. पु. p. 560 साक्षिभूते
8 मत्स्य. पु. p. 560 तुले for बहिः

सर्वभूतात्मभूतस्थे नमस्ते [1]विश्वकारिणि ।
ततोऽवतीर्य गुरवे [2]पूर्वमर्धं निवेदयेत् ॥
ऋत्विग्भ्योऽपरमर्द्धं च दद्यादुदकपूर्वकम् ।
गुरवे ग्रामरत्नानि ऋत्विग्भ्यश्च निवेदयेत्[3] ॥
प्राप्य तेषामनुज्ञां च तथाऽन्येभ्योऽपि च दापयेत् ।
दीनानाथविशिष्टान्[4] हि पूजयेद्ब्राह्मणैः सह ॥

अर्धं गुरुवे अर्धं ऋत्विग्भ्यो देयमिति समस्ततुलापुरुषद्रव्यदानमित्येकः पक्षः । तेभ्यो ग्रामरत्नादीनि दत्वा तदाज्ञयाऽन्येभ्योऽपि[5] दद्यात् इत्यपरः पक्षः[6] । दीनानाथविशिष्टेभ्यो देयमित्यपरः पक्षः । 'विशिष्टाः' अब्राह्मणा अपि पितृमातृशुश्रूषादिगुणयुक्ताः ।

न चिरं[7] धारयेद्देहे सुवर्णं प्रोक्षितं बुधः ।
तिष्ठद्भयावहं यस्माच्छोकव्याधिकरं नृणाम् ॥
शीघ्रं परस्वीकरणाच्छ्रेयः प्राप्नोति पुष्कलम् ।

1 I. O., विश्वधारिणि
2 I. O., पूर्वमर्द्धं; Udaipur Ms. reads पूर्ववच्च
3 I. O. and A. S. B. supply this verse.
4 मत्स्य. पु. p. 560 विशिष्टादीन्
5 A. S. B., तदनुज्ञया
6 I. O. used to correct text
7 मत्स्य. पु. p. 560 धारयेद्देहे

अनेन विधिना यस्तु तुलापुरुषमाचरेत् ॥
प्रतिलोकाधिपस्थाने प्रतिमन्वन्तरं [1]व्रजेत् ।
विमानेनाऽर्कवर्णेन किङ्किणीजालमालिना ॥
पूज्यमानोऽप्सरोभिश्च ततो विष्णुपुरं व्रजेत् ।
कल्पकोटिशतं यावत् तस्मिन् लोके[2] स मोदते ॥

कर्मक्षयादिह पुनर्भुवि राजराजो
भूपालमौलिमणिरञ्जितपादपीठः[3] ।
श्रद्धान्वितो भवति यज्ञसहस्रयाजी
दीप्तप्रतापजितसर्वमहीपलोकः ॥
यो दीयमानमपि पश्यति भक्तियुक्तः
कालान्तरे स्मरति वाचयतीह लोके ।
यो वा शृणोति पठतीन्द्रसमानरूपः
प्राप्नोति धाम स पुरन्दरदेवजुष्टम् ॥

इति तुलापुरुषदानविधिः ।

## अथ हिरण्यगर्भदानविधिः (२)

तत्र मत्स्यपुराणे[4]

अथाऽतः सम्प्रवक्ष्यामि महादानमनुत्तमम् ।

1 *Ibid*, वसेत्
2 A. S. B. and म. पु. p. 560 महीयते
3 Udaipur पारवीरः
4 मत्स्य. पु. अध्याय 275. p. 560

नाम्ना हिरण्यगर्भाख्यं महापातकनाशनम् ।
पुण्यं दिनं समासाद्य तुलापुरुषदानवत् ॥
ऋत्विङ्मण्डलसम्भारभूषणाच्छादनादिकम् ।
कुर्यादुपोषितस्तद्वल्लोकेशावाहनं बुधः ॥
पुण्याहवाचनं कृत्वा ततः कृत्वाऽधिवासनम् ।
ब्राह्मणैरानयेत्[1] [2]कुण्डं तपनीयमयं शुभम् ॥
द्वासप्तत्यङ्गुलोच्छ्रायहेमपङ्कजगर्भवत् ।
त्रिभागहीनविस्तारं प्रशस्तमुरजाकृति ॥
दशास्त्राणि सरत्नानि दानसूची तथैव च ।
हेमनालं सपिटकं बहिरादित्यसंयुतम् ॥

'तपनीयमयं' सुवर्णमयम् । 'त्रिभागहीनविस्तारं' अष्टचत्वारिंशदङ्गुलविस्तारम् । 'बहिरादित्यसंयुतं' होमकुण्डाद्बहिरादित्यसंयुतम् । एतत्सर्वं पार्श्वतः स्थापयेतित्यर्थः[3] ।

तथैवाऽऽवरणं नाभेरुपवीतं च काञ्चनम् ॥
पार्श्वतः स्थापयेद्धीमान्[4] हेमदण्डं कमण्डलुम् ।
पद्माकारं पिधानं[5] स्यात्समन्तादङ्गुलाधिकम् ॥
मुक्तावलीसमोपेतं पद्मरागसमन्वितम्[6] ।

1 I. O., ब्राह्मणैर्विन्यसेत्
2 मत्स्य. पु. p. 560 कुम्भम्
3 I. O. Supplies this clause
4 I. O. and म. पु. p. 560 यद्वत् for धीमान्
5 Udaipur Ms. reads विधानं for पिधानं
6 Udaipur Ms. दलान्वितम्

तिलद्रोणोपरिगतं वेदीमध्ये ततोऽर्चयेत् ॥

'द्रोणः' धान्यपर्वते वक्ष्यमाणः ।

ततो मङ्गलशब्देन ब्रह्मघोषरवेण च ।
सर्वौषध्युदकस्नानस्नापितो वेदपुङ्गवैः ॥
शुक्लमाल्याम्बरधरः सर्वाभरणभूषितः ।
इममुच्चारयेन्मन्त्रं गृहीतकुसुमाञ्जलिः ॥
'नमो हिरण्यगर्भाय हिरण्यकवचाय च ।
सप्तलोकसुराध्यक्ष जगद्धात्रे नमो नमः ॥
भूर्ल्लोकप्रमुखा लोकास्तव गर्भे व्यवस्थिताः ।
ब्रह्मादयस्तथा देवा नमस्ते विश्वधारिणे ॥
नमस्ते भुवनाधार नमस्ते भुवनाश्रय ।
नमो हिरण्यगर्भाय [1]गर्भे यस्य पितामहः ॥
यतस्त्वमेव भूतात्मा भूते भूते व्यवस्थितः ।
तस्मान्मामुद्धराऽशेषदुःखसंसारसागरात्' ॥
एवमामन्त्र्य [2]तन्मध्यमाविश्याऽऽस्त उदङ्मुखः ।
मुष्टिभ्यां सम्परिगृह्य धर्मराजचतुर्मुखौ ॥
जानुमध्ये शिरः कृत्वा तिष्ठेदुच्छ्वासपञ्चकम् ।
गर्भाधानं पुंसवनं सीमन्तोन्नयनं तथा ॥
कुर्युर्हिरण्यगर्भस्य ततस्ते द्विजपुङ्गवाः ।
गीतमङ्गलघोषेण गुरुरुत्थापयेत्ततः ॥

1 I. O., सर्वस्यान्तं for गर्भे यस्य

2 I. O., मध्यादाविश्य

जातकर्मादिकाः कुर्युः क्रियाः षोडश चाऽपराः ।
सूच्यादिकं च गुरवे [1]दत्वा मन्त्रमिमं जपेत् ॥
'नमो हिरण्यगर्भाय विश्वगर्भाय वै नमः ।
चराचरस्य जगतो गृहभूताय वै नमः ॥
मात्राऽहं[2] जनितः पूर्वं मर्त्यधर्मा नरोत्तमः[3] ।
त्वद्गर्भसम्भवादेव दिव्यदेहो भवाम्यहम्' ॥
चतुर्भिः कलशैर्भूयस्ततस्ते द्विजपुङ्गवाः ।
स्नानं कुर्युः प्रसन्नाङ्गाः सर्वाभरणभूषिताः ॥

'स्नानं कुर्युः' यजमानस्येति शेषः ।

'देवस्यत्वे'ति मन्त्रेण स्थितस्य कनकासने ।
'अद्य जातस्य तेऽङ्गानि अभिषिच्यामहे वयम् ॥
दिव्येन तेन वपुषा चिरञ्जीव सुखी भव' ।
ततो हिरण्यगर्भं तं तेभ्यो दद्याद्विचक्षणः ॥
ते पूज्याः सर्वभावेन बहवो वा तदाज्ञया ।
तत्रोपकरणं सर्वं गुरवे विनिवेदयेत् ॥
पादुकोपानहच्छत्रचामरासनभाजनम् ।
ग्रामं च विषयं वाऽपि यदन्यदपि तद्भवेत् ॥

'विषयो' ग्रामसमूहः । 'अन्यत्' रत्नादि ।

अनेन विधिना यस्तु पुण्येऽहनि निवेदयेत् ।

1 मत्स्य. पु. p. 561 दद्यात्

2 मत्स्य. पु. p. 561 यथाहं

3 I. O., मर्त्यलोके नरोत्तमः

हिरण्यगर्भदानं स ब्रह्मलोके महीयते ॥
पुरेषु लोकपालानां प्रतिमन्वन्तरं वसेत् ।
कल्पकोटिशतं यावत् ब्रह्मलोके महीयते ॥

कलिकलुषविमुक्तः पूजितस्सिद्धसाध्यैः
अमरचमरमालावीज्यमानोऽप्सरोभिः ।
पितृशतमथ बन्धून् पुत्रपौत्रप्रपौत्रान्
अपि नरकनिमग्नांस्तारयेदेक एव ॥

इति पठति य इत्थं यः शृणोतीह सम्यक्
मधुरिपुरिव लोके पूज्यते सोऽपि सिद्धैः ।
मतिमपि च जनानां यो ददाति प्रियार्थं
विबुधपतिजनानां नायकः स्यादमोघम् ॥

इति हिरण्यगर्भदानविधिः ॥

## अथ ब्रह्माण्डदानम् (३)

तत्र मत्स्यपुराणे[1]

अथाऽतः सम्प्रवक्ष्यामि [2]ब्रह्माण्डं विधिपूर्वकम् ।
यत् श्रेष्ठं सर्वदानानां महापातकनाशनम् ॥
पुण्यं दिनमथाऽऽसाद्य तुलापुरुषदानवत् ।
ऋत्विङ्मण्डपसम्भारभूषणाच्छादनादिकम् ॥
लोकेशावाहनं तद्वदधिवासनकं तथा ।

1 अ. 276. pp. 562 ff

2 मत्स्य. पु. p. 562 ब्रह्माण्डविधिमुत्तमम्

कुर्याद्विंशत्पलादूर्द्ध्वमासहस्राच्च शक्तितः ॥
कलशद्वयसंयुक्तं ब्रह्माण्डं काञ्चनं बुधः ।
दिग्गजाष्टकसंयुक्तं षड्वेदाङ्गसमन्वितम्[1] ॥
लोकपालाष्टकोपेतं मध्यस्थितचतुर्मुखम् ।
शिवाच्युतार्कशिखरं[2] उमालक्ष्मीसमन्वितम् ॥
वस्वादित्यमरुद्गर्भमहारत्नसमन्वितम् ।
वितस्तेरङ्गुलशतं यावदायामविस्तरम् ॥

'महारत्नानि' पद्मरागादीनि । 'वितस्तेरङ्गुलशतं यावत्' द्वादशाङ्गुलमारभ्याऽङ्गुलशतं यावत् शक्त्यनुसारेण कार्य्य-मित्यर्थः ।

कौशेयवस्त्रसंवीतं तिलद्रोणोपरि न्यसेत् ।
तथाऽष्टादश धान्यानि समन्तात्परिकल्पयेत् ॥
पूर्वेणाऽनन्तशयनं प्रद्युम्नं पूर्वदक्षिणे ।
प्रकृतिं दक्षिणे देशे सङ्कर्षणमतः परम् ॥
पश्चिमे चतुरो वेदान् अनिरुद्धमतः परम् ।

'अनन्तशयनः' शेषशायी । 'प्रकृतिः' देवी । [3]वेदमूर्त्तयो भूतघटे वक्ष्यन्ते ।

अग्निमुत्तरतो हैमं वासुदेवमतः परम् ।

1 I. O. Omits this verse
2 I. O., शेषस्थं
3 A. S. B., देवमूर्तयः

समन्ताद्कुडपीठस्थान्[1] अर्पयेत्[2] काञ्चनान् बुधः ॥
स्थापयेद्वस्त्रसंवीतान् पूर्णकुम्भान् दशैव तु ।
दशैव धेनवो देयाः सहेमाम्बरदोहनाः ॥
पादुकोपानहच्छत्रचामरासनदर्पणैः ।
भक्ष्यभोज्यान्नदीपेक्षुफलमाल्यानुलेपनैः ॥
होमाधिवासनान्ते च स्नापितो वेदपुङ्गवैः ।
इममुच्चारयेन्मन्त्रं त्रिकृत्वाऽथ प्रदक्षिणम् ॥

'नमोऽस्तु विश्वेश्वर विश्वधाम
जगत्सवित्रे[3] भगवन्नमस्ते ।
सप्तार्चिलोकामरभूतलेश[4]-
गर्भेण सार्द्धं वितराऽभिरक्षाम् ॥
ये दुःखितास्ते सुखिनो भवन्तु
प्रयान्तु[5] पापानि चराचराणाम् ।
त्वद्दानशस्त्राहतपातकानां[6]
ब्रह्माण्डदोषाः[7] प्रलयं व्रजन्तु' ॥
एवं प्रणम्याऽमरविश्वगर्भं
दद्याद्द्विजेभ्यो [8]दशधा विभज्य ।

1 I. O., समन्तात् कुण्डमध्यस्थान्
2 I. O., अर्चयेत्; so also म. पु. p. 562
3 I. O. and मत्स्य. पु. p. 562 जगत्सवित्रे Udaipur जगत्पवित्रे
4 I. O., सप्ताधिलोक; म. पु. p. 562 सप्तर्षिलोकामर
5 I. O., नश्यन्तु
6 I. O., त्वज्ज्ञान.
7 I. O., ब्रह्माण्डदानात् and प्रयान्तु
8 Udaipur Ms. शतधा

भागद्वयं तत्र गुरोः प्रकल्प्य
समं भजेत्[1] शेषमतः क्रमेण ॥

स्वल्पे च देये गुरुरेक एव[2]
कुर्यादथैकाग्निविधानयुक्त्या ।
स एव सम्पूज्यतमोऽल्पवित्तैः[3]
यथोक्तवस्त्राभरणादिकेन[4] ॥

इत्थं य एतदखिलं पुरुषोऽत्र कुर्याद्
ब्रह्माण्डदानमधिगम्य महद्विमानम् ।
निर्धूतकल्मषतनुः सहसा[5] मुरारेः
आनन्दकृत्यदमुपैति सहाऽप्सरोभिः ॥

सन्तारयेत्पितृपितामहपुत्रपौत्र-
बन्धुप्रियातिथिकलत्रशताष्टकं सः[6] ।
ब्रह्माण्डदानशकलीकृतपातकौघ-
मानन्दयेच्च जननीकुलमप्यशेषम् ॥

इति पठति शृणोति वा य एतत्
सुरभवनेषु गृहेषु धार्मिकाणाम् ।

1 I. O., समं भवेत्

2 A. S. B. and I. S. O., स्वल्पे च देये गुरुरेक एव but Udaipur Ms. reads स्वल्पेव हैमगुरुः

3 I. O., तमात्मविद्भिः

4 I. O. and A. S. B., यथार्थ; म. पु. यथोक्त

5 I. O., कल्मषतनुः सहसा; Udaipur Ms. कल्मषविशुद्धतनुं

6 Udaipur Ms. शतात्मकं

मतिमपि च ददाति मोदतेऽसौ
अमरपतेर्भवने सहाऽप्सरोभिः[1] ॥

इति ब्रह्माण्डदानम् ॥

## अथ कल्पपादपदानम् (४)

तत्र मत्स्यपुराणे[2]

कल्पपादपदानाख्यमतः परमनुत्तमम् ।
महादानं प्रवक्ष्यामि सर्वपातकनाशनम् ॥
पुण्यं दिनमथाऽऽसाद्य तुलापुरुषदानवत्[3] ।
पुण्याहवाचनं कृत्वा लोकेशावाहनं तथा ॥
ऋत्विङ्मण्डपसम्भारभूषणाच्छादनादिकम् ।
काञ्चनं कारयेद्वृक्षं नानाफलसमन्वितम् ॥
नानाविहगवस्त्राणि भूषणाच्छादनानि[4] च ।
शक्तितस्त्रिपलादूर्ध्वमासहस्रात्प्रकल्पयेत् ॥
ततस्तप्तसुवर्णेन[5] कारयेत्कल्पपादपम् ।

1 Omitted in I. O.

2 मत्स्य. पु. ch. 277. ( pp. 563 ff. )

3 Missing in Udaipur Ms. Supplied by A. S. B. and I. O.

4 मत्स्य. पु. भूषणानि च कारयेत्

5 I. O. reading is better–ततस्तप्तसुवर्णेन ; A. S. B. and मत्स्य. पु., अर्धक्लृप्तसुवर्णेन ; Udaipur Ms. reads wrongly अप्रकृत्यसुवर्णस्य

गुडप्रस्थोपरिष्टाच्च सितवस्त्रयुगान्वितम्[1] ॥
ब्रह्मविष्णुशिवोपेतं पञ्चशाखं सभास्करम् ।
कामदेवमधस्ताच्च सकलत्रं प्रकल्पयेत् ॥
सन्तानं पूर्वतस्तद्वत्तुरीयांशेन कल्पयेत्[2] ।
मन्दारं दक्षिणे पार्श्वे श्रिया सार्द्धं घृतोपरि ॥
पश्चिमे पारिभद्रं तु सावित्र्या सह जीरके ।
सुरभीसहितं तद्वत्तिलेषु हरिचन्दनम् ॥
तुरीयांशेन सौम्येन कुर्वीत फलसंयुतम् ।

'तुरीयांशेन' यावता पादपाक्षिप्तसुवर्णांशेन मध्यपादपः प्रतिमादिसहितः क्रियते, तदीयचतुर्थचतुर्थांशेन सन्तानादयश्चत्वारः प्रतिमादिसहिताः कर्त्तव्याः ।

कौशेयवस्त्रसंयुक्तानिक्षुमाल्यफलान्वितान् ।
तथाऽष्टौ पूर्णकलशान् पादुकासनभाजनम्[3] ॥
दीपिकोपानहच्छत्रचामरासनसंयुतम् ।
फलमाल्ययुतं तद्वदुपरिष्टात् वितानकम्[4] ॥
तथाऽष्टादश धान्यानि समन्तात्परिकल्पयेत् ।
होमाधिवासनान्ते[5] च स्नापितो वेदपुङ्गवैः ॥

1 I. O., युगावृतम्

2 I. O., सम्भावं पूर्ववत् तद्वत् पुरीपार्श्वे च कल्पयेत्

3 I. O. supplies this line; A. S. B. reads पादुकासन; मत्स्य. पु. has पादुकाशन; Udaipur Ms. has पादुकानाति भाजनं

4 I. O. supplies this line

5 I. O., होमवीरासनाग्रे

त्रिप्रदक्षिणमावृत्य मन्त्रमेतमुदीरयेत्[1] ।
'नमस्ते कल्पवृक्षाय चिन्तितार्थप्रदायिने ॥
विश्वम्भराय देवाय नमस्ते विश्वमूर्त्तये ।
यस्मात्त्वमेव विश्वात्मा ब्रह्मा स्थाणुर्दिवाकरः[2] ॥
मूर्त्तामूर्त्ते परं बीज अतः पाहि सनातन ।
त्वमेवाऽमृतसर्वस्वमनन्तः पुरुषोत्तमः ॥
सन्तानाद्यैरुपेतस्सन् पाहि संसारसागरात्' ।
एवमामान्त्रितं दद्याद्गुरवे कल्पपादपम् ॥
चतुर्भ्यश्चाऽथ ऋत्विग्भ्यः सन्तानादीन् प्रकल्पयेत् ।
स्वल्पेऽप्येकाग्निवत्कुर्यात् गुरवे चाऽभिपूजनम् ॥
न वित्तशाठ्यं कुर्वीत न च विस्मयवान् भवेत् ।
अनेन विधिना यस्तु महादानं निवेदयेत् ॥
सर्वपापविनिर्मुक्तः सोऽश्वमेधफलं लभेत् ।
अप्सरोभिः परिवृतः सिद्धचारणकिन्नरैः[3] ॥
भूतान् भव्यांश्च मनुजांस्तारयेद्गोत्रसम्मितान् ।
स्तूयमानो दिवः पृष्ठे पुत्रपौत्रप्रपौत्रकैः ॥
विमानेनाऽर्कवर्णेन विष्णुलोकं स गच्छति ।
दिवि कल्पशतं तिष्ठेद्राजराजो भवेन्नरः[4] ॥
नारायणबलोपेतो नारायणपरायणः ।
नारायणकथासक्तो नारायणपुरं व्रजेत् ॥

1 I. O., मन्त्रानेतान्

2 Four slokas from here are omitted by I. O.

3 I. O., गुह्यकैः

4 A. S. B., भवेत्ततः

यो वाचयेत्[1] सकलकल्पतरुप्रदानं
यो वा शृणोति पुरुषोऽल्पधनः स्मरेद्वा ।
सोऽपीन्द्रलोकमधिगम्य सहाऽप्सरोभिः
मन्वन्तरं वसति पापविमुक्तदेहः ॥

इति [2]कल्पपादपदानम् ॥

## अथ गोसहस्रदानम् (५)

तत्र मत्स्यपुराणे[3]

अथाऽतः सम्प्रवक्ष्यामि महादानमनुत्तमम् ।
गोसहस्रप्रदानाख्यं सर्वपापहरं परम् ॥
पुण्यां तिथिमथाऽऽसाद्य युगमन्वन्तरादिकम् ।
पयोव्रतं त्रिरात्रं स्यादेकरात्रमथापि च ॥
लोकेशावाहनं कुर्यात्तुलापुरुषदानवत् ।
पुण्याहवाचनं कुर्याद्धोमकार्यं तथैव च ॥
ऋत्विङ्मण्डपसम्भारभूषणाच्छादनादिकम् ।
वृषं लक्षणसंयुक्तं वेदिमध्येऽधिवासयेत्[4] ॥
गोसहस्राद्विनिष्क्रम्य गवां दशकमेव तु ।

1 I. O., यो वा पठेत् ; so also मत्स्य. पु. p. 564
2 A. S. B., कल्पपादपदानम् ; Udaipur Ms., कल्पतरुदानम्
3 अ. 278
4 I. O., निधापयेत्

सर्वलक्षणसंयुक्तं शुभलक्षणसंयुतम् ॥

लक्षणानि च शुभानि मत्स्यपुराणोक्तानि—

'उन्नतस्कन्धककुदमुज्ज्वलायतकम्बलम्'

इत्यादीनि । 'विनिष्कृष्य' गवां दशसहस्रकम् । अग्रे दशाधिकसहस्रविनियोगदर्शनात् ।

गोसहस्रं बहिः कुर्याद्वस्त्रमाल्यविभूषितम् ।
सुवर्णश्रृङ्गाभरणं रौप्यपादसमन्वितम्[1] ॥
अन्तः[2] प्रवेश्य दशकं वस्त्रमाल्यैस्सुपूजयेत् ।
सुवर्णघण्टिकायुक्तं [3]कांस्यदोहनकान्वितम् ॥
सुवर्णतिलकोपेतं हेमपट्टैरलङ्कृतम्[4] ।
कौशेयवस्त्रसंवीतं माल्यगन्धसमन्वितम् ॥
हेमरत्नयुतैः श्रृङ्गैश्चामरैरुपशोभितम् ।
पादुकोपानहच्छत्रचामरासनसंयुतम्[5] ॥
गवां दशकमध्ये स्यात् काञ्चनो नन्दिकेश्वरः ।

1 मत्स्य. पु. p. 564. हेमाद्रि–दानखण्डम्, p. 253 cites these verse as पुराणान्तरे. In some Manuscripts of मत्स्य. पु. these verses are missing.

2 Udaipur Ms, A. S. B., and मत्स्य. पु. have अन्तः प्रवेश्य दशकं ; I. O. reads–अतोऽस्य वैश्यदशकैः

3 मत्स्य. पु. कांस्यदोहन Udaipur Ms.reads ताम्र for कांस्य

4 I. O., हेमपादैः

5 मत्स्य. पु. and हेमाद्रि, p. 254 read भाजनासन

कौशेयवस्त्रसंवीतो नानाभरणसंयुतः[1] ॥
लवणद्रोणशिखरे[2] माल्येक्षुफलसंयुतः ।
कुर्यात् पलशतादूर्द्ध्वं सर्वमेतदशेषतः ॥
शक्तितः[3] पलसाहस्रत्रितयं यावदेव तु[4] ।
गोशतेऽपि दशांशेन सर्वमेतत्समाचरेत्[5] ॥
पुण्यं कालमथाऽऽसाद्य गीतमङ्गलनिस्वनैः ।
सर्वौषध्युदकस्नानस्नापितो वेदपुङ्गवैः ॥
इममुच्चारयेन्मन्त्रं गृहीतकुसुमाञ्जलिः ।
'नमो वै[6] विश्वमूर्त्तिभ्यो विश्वमातृभ्य एव च ॥
लोकाधिवासिनीभ्यश्च रोहिणीभ्यो नमो नमः ।
गवामङ्गेषु तिष्ठन्ति भुवनान्येकविंशतिः ॥
ब्रह्मादयस्तथा देवा रोहिण्यः पान्तु मातरः[7] ।
गावो ममाऽग्रतः सन्तु गावः पृष्ठत एव च ॥
गावः शिरसि मे नित्यं गवां मध्ये वसाम्यहम् ।
यस्मात्त्वं वृषरूपेण धर्म एव सनातनः ॥
अष्टमूर्त्तेरधिष्ठानमतः पाहि सनातन' ।
इत्यामन्त्र्य ततो दद्याद्गुरवे नन्दिकेश्वरम् ॥

1 I. O. म. पु, and हेमाद्रि have भूषितः
2 I. O., संस्थश्च
3 हेमा. p. 254 भक्तितः
4 I. O. is followed; Udaipur Ms. reads त्रिपलं यावदेव तु
5 हेमा. p. 254 प्रकल्पयेत्
6 I. O. and मत्स्य. पु. p. 564 read नमोऽस्तु
7 Line supplied by I. O.

सर्वोपकरणोपेतं गोयुगं च विचक्षणः ।
ऋत्विग्भ्यो धेनुमेकैकां दशकाद्विनिवेदयेत् ॥
गवां शतमथैकैकं तदर्द्धं वाऽथ विंशतिम् ।
दश पञ्चाऽथवा [1]दद्यादन्येभ्यस्तदनुज्ञया ॥
नैका बहुभ्यो दातव्या यतो दोषकरी भवेत् ।
बहुश्चैकस्य दातव्या श्रीमदारोग्यवृद्धये ॥
पयोव्रतः पुनस्तिष्ठेदेकाहं गोसहस्रदः ।
श्रावयेत् शृणुयाद्वाऽपि महादानानुकीर्तनम् ॥
तद्दिनं ब्रह्मचारी स्याद्यदीच्छेद्विपुलां श्रियम् ।
अनेन विधिना यस्तु गोसहस्रप्रदो भवेत्[2] ॥
सर्वपापविनिर्मुक्तः सिद्धचारणसेवितः ।
विमानेनाऽर्कवर्णेन किङ्किणीजालमालिना ॥
सर्वेषां लोकपालानां [3]लोके सम्पूज्यतेऽमरैः ।
प्रतिमन्वन्तरं तिष्ठेत् राजराजो भवेन्नरः[4] ॥

तथा

यावत्कल्पशतं तिष्ठेत् राजराजो भवेत्पुनः[5] ।
अश्वमेधशतं कुर्याच्छिवध्यानपरायणः ॥

1 हेमा. दानख. p. 255, वाधिकस्तदनुज्ञया
2 म. पु. p. 565
3 I. O., सम्यक् सम्पूज्यते नरैः
4 I. O. thus, with हेमा p. 257; but मत्स्य. पु. p. 565, Udaipur Ms. and A. S. B. read पुत्रपौत्रसमन्वितः
5 I. O. and हेमा. p. 257 omit this line

वैष्णवं [1]योगमास्थाय ततो मुच्येत बन्धनात् ।
पितरश्चाऽभिनन्दन्ति गोसहस्रप्रदर्शनात् ॥
अपि स्यात्स कुलेऽस्माकं पुत्रो[2] दौहित्र एव वा ।
गोसहस्रप्रदो भूत्वा नरकादुद्धरिष्यति ॥
तस्य कर्मकरो वा स्यादपि [3]द्रष्टा तथैव च ।
संसारसागरादस्माद्योऽस्मान् सन्तारयिष्यति ॥
इति पठति च एतद्गोसहस्रप्रदानं
सुरभुवनमुपेयात्संस्मरेद्वाऽथ पश्येत् ।
अनुभवति सुवासं वाच्यमानो निकामं
प्रहतकलुषदेहः सोऽपि यातीन्द्रलोकम् ॥

इति गोसहस्रदानम् ॥

## अथ कामधेनुदानम् (६)

तत्र मत्स्यपुराणे[4]

अथाऽतः [5]शृणु भूपाल कामधेनुविधिं परम् ।
सर्वकामफलं नृणां महापातकनाशनम् ॥

1 हेमा. p. 257 लोकमासाद्य; A. S. B. योगमासाद्य
2 I. O., पौत्रो दौहित्र एव च
3 Udaipur Ms. reads दृष्ट्या; I. O. श्रेष्ठस्तथैव च
4 ch. 279, pp 565 ff.
5 मत्स्य. पु. p. 565 and हेमा. p. 265 have सम्प्रवक्ष्यामि for शृणु भूपाल

लोकेशावाहनं तद्वद्धोमः कार्योऽधिवासनम् ।
तुलापुरुषवत्कुर्यात् कुण्डमण्डपवेदिकाः ॥
स्वल्पेऽप्येकाग्निवत्कुर्याद्गुरुरेव समाहितः ।
काञ्चनस्याऽतिशुद्धस्य धेनुं वत्सं च कारयेत् ॥
उत्तमा पलसाहस्रैस्तदर्द्धेन तु मध्यमा ।
कनीयसी तदर्द्धेन कामधेनुः प्रकीर्त्तिता ॥
शक्तितस्त्रिपलादूर्द्ध्वमशक्तोऽपीह कारयेत् ।
वेद्यां कृष्णाजिनं न्यस्य[1] गुडप्रस्थसमन्वितम् ॥
न्यसेच्च परितो धेनुं महारत्नैरलङ्कृताम् ।
कुम्भाष्टकसमोपेतां नानाफलसमन्विताम् ॥
तथाऽष्टादश धान्यानि [2]समन्तात्परिकल्पयेत् ।
इक्षुदण्डाष्टकं तद्वत् नानाफलसमन्वितम्[3] ॥
भाजनं वासनं तद्वत्ताम्रदोहनकं तथा ।

कौशेयवस्त्रद्वयसम्प्रयुक्तां
दीपातपत्राभरणाभिरामाम् ।
सचामरां कुण्डलिनीं सघण्टां
मणित्रिकापादुकरौप्यपादाम् ॥
रसैश्च सर्वैः पुरतोऽभिजुष्टां
हरिद्रया पुष्पफलैरनेकैः ।

1 हेमा. p. 265 has तस्य for न्यस्य

2 I. O., समरत्नो for समन्तात्

3 I. O. and A. S. B., विभूषितम्

अजाजिकुस्तुम्बुरुशर्कराभि-
र्वितानकं चोपरि पञ्चवर्णम् ॥

'मणित्रिकापादुकरौप्यपादामि'ति मणित्रिकापादुका च [सा]रौप्यपादा चेति विग्रहः । 'मणित्रिका' अक्षमाला । 'अजाजी'जीरकः । 'कुस्तुम्बुरु'धान्यकम् ।

स्नातस्ततो मङ्गलवेदघोषैः
प्रदक्षिणीकृत्य सपुष्पहस्तः ।
आवाहयेत्तां गुडधेनुमन्त्रै-
र्द्विजाय दद्यादथ दर्भपाणिः ॥

'द्विजाये'ति एकस्मै द्विजाय । एतच्चैकाग्निविधानपक्षे । अनेकाग्निविधानपक्षे तु तुलापुरुषवदनेकेभ्योऽपि देया ।

'त्वं सर्वदेवगणमन्दिरमण्डभूता
विश्वेश्वरत्रिपथगोदधिपर्वतानाम् ।
त्वद्दानशस्त्रशकलीकृतपातकौघः
प्राप्तोऽस्मि निर्वृतिमतीव परां नमामि ॥

लोके यथेप्सितफलार्थविधायिनीं त्वां
आसाद्य को हि सहते भवबन्धदुःखम्[1] ।
संसारदुःखशमनाय यतस्व कामं
त्वां कामधेनुरिति देवगणा वदन्ति' ॥

आमन्त्र्य शीलकुलरूपगुणान्विताय
विप्राय यः कनकधेनुमिमां प्रदद्यात् ।

1 I. O. and हेमा. p. 267 have भवदुःखमुपैति मर्त्यः

प्राप्नोति धाम स पुरन्दरदेवजुष्टं
कन्यागणैः परिवृतः पदमिन्दुमौलेः ॥

इति कामधेनुदानम् ॥

## अथ [1]हिरण्याश्वदानम् (७)

तत्र मत्स्यपुराणे[2]

अथाऽतः सम्प्रवक्ष्यामि हिरण्याश्वविधिं परम् ।
यस्य [3]प्रसादाद् भुवनमनन्तफलमश्नुते ॥
पुण्यां तिथिमथाऽऽसाद्य[4] कृत्वा ब्राह्मणवाचनम् ।
लोकेशावाहनं कुर्यात् तुलापुरुषदानवत् ॥
ऋत्विङ्मण्डपसम्भारभूषणाच्छादनादिकम् ।
स्वल्पे[5] त्वेकाग्निवत्कुर्यात् हेमवाजिमखं बुधः ॥
स्थापयेद्वेदिमध्ये तु कृष्णाजिनतिलोपरि ।
कौशेयवस्त्रसंवीतं कारयेद्धेमवाजिनम् ॥
शक्तितस्त्रिपलादूर्द्ध्वमासहस्रपलाद्बुधः ।
पादुकोपानहच्छत्रचामरासनभाजनैः ॥

1 cf. Hemadri, दानखण्डम् pp. 273 ff.

2 ch. 280 pp 566 ff.

3 मत्स्य. पु. p 566 प्रदानात् भुवनेऽनन्तं फलमश्नुते

4 I. O., तिथिं समासाद्य

5 Line corrupt in Udaipur Ms. A. S. B. reads अल्पे for स्वल्पे

पूर्णकुम्भाष्टकोपेतां माल्येक्षुफलसंयुताम् ।
शय्यां सोपस्करां तद्वद्धेममार्तण्डसंयुताम् ॥
ततः सर्वौषधिस्नानस्नापितो वेदपुङ्गवैः ।
इममुच्चारयेन्मन्त्रं गृहीतकुसुमाञ्जलिः ॥
'नमस्ते सर्वदेवेश वेदाहरणलम्पट ।
वाजिरूपेण मामस्मात्पाहि संसारसागरात् ॥
त्वमेव सप्तधा भूत्वा छन्दोरूपेण भास्करम् ।
यस्मात्पालयसे[1] लोकानतः पाहि सनातन' ॥
एवमुच्चार्य गुरवे [2]तमश्वं विनिवेदयेत् ।
दत्वा पापक्षयात् [3]भानोर्लोकमभ्येति शाश्वतम् ॥
गोभिर्विभवतः सर्वान् ऋत्विजश्चाऽभिपूजयेत् ।
सर्वधान्योपकरणं गुरवे विनिवेदयेत् ॥
सर्वं सस्यादिकं[4] दत्वा भुञ्जीताऽतैलमेव हि ।
पुराणश्राविणं तद्वत्कारयेद्भोजनादिकम् ॥

'विभवतः' स्वविभवानुसारेण ऋत्विग्भ्यो गां दद्यात् । 'सर्वधान्योपकरण'मिति विनियोगात् पूर्वं धान्यस्याऽदानं गम्यते । 'पुराणश्रावी' पुराणस्य श्रावयिता ।

1 I. O., पालयते लोकान्; मत्स्य. पु. p. 566 भासयसे लोकान्; Udaipur Ms. भ्रामसमालोकान्, which is apparently a misreading of भ्रामयसे

2 मत्स्य. पु. p. 566 तमश्वं ; I. O., समखं

3 I. O., दानैः

4 मत्स्य. पु. शय्यादिकं ; which हेमाद्रि follows. p. 274

इमं हिरण्याश्वविधिं करोति यः
सम्पूज्यमानो दिवि देवतेन्द्रैः ।
विमुक्तपापः स पुरं मुरारेः
प्राप्नोति सिद्धैरभिपूजितस्सन् ॥

इति पठति य एतद्धेमवाजिप्रदानं
कलिकलुषविमुक्तः[1] सो[2]ऽश्वमेधेन भूयः ।
कनकमयविमानेनाऽर्कलोकं प्रयाति
त्रिदशपतिवधूभिः पूजितो योऽथ पश्येत्[3] ॥

यो वा शृणोति पुरुषोऽल्पधनः स्मरेद्वा
हेमाश्वदानमभिनन्दयतीह लोके ।
सोऽपि प्रयाति [4]हतकल्मषशुद्धदेहः
स्थानं पुरन्दरमहेश्वरदेवजुष्टम् ॥

इति हिरण्याश्वदानम् ॥

## अथाश्वरथदानम् (८)

तत्र मत्स्यपुराणे[5]

अथाऽतः सम्प्रवक्ष्यामि महादानमनुत्तमम् ।

1 A. S. B. मत्स्य. पु. and हेमा. read सकलकलुष

2 I. O., चाश्वमेधेन तुल्यम् ; A. S. B., सोऽश्वमेधेन भूयः ; मत्स्य. पु. युक्तः for भूयः

3 I. O. reading confirmed by हेमा. p. 275

4 A. S. B., हतकिल्बिष; I. O., हतकिल्बिष; Udaipur Ms. खलुकल्मष म. पु. and हेमा, p. 275 हतकल्मष

5 मत्स्य. पु. ch. 281, p. 567 ff. हेमा. p. 277 ff.

पुण्यमश्वरथं नाम महापातकनाशनम् ॥
पुण्यं दिनमथाऽऽसाद्य कृत्वा ब्राह्मणवाचनम् ।
लोकेशावाहनं कुर्यात्तुलापुरुषदानवत् ॥
ऋत्विङ्मण्डपसम्भारभूषणाच्छादनादिकम् ।
कृष्णाजिने तिलान् कृत्वा काञ्चनं स्थापयेद्रथम् ॥
सप्ताश्वं[1] चतुरश्वं वा चतुश्चक्रं सकूबरम्[2] ।

'कूबरो' युगाधारकाष्ठम् ।

ऐन्द्रनीलेन कुम्भेन ध्वजरूपेण संयुतम् ।
लोकपालाष्टकोपेतं पद्मरागदलान्वितम् ॥
चत्वारः पूर्णकलशा धान्यान्यष्टादशैव तु ।
कौशेयवस्त्रसंयुक्तमुपरि स्याद्वितानकम् ॥
माल्येक्षुफलसंयुक्तं पुरुषेण समन्वितम् ।
यो यद्भक्तः पुमान् कुर्यात् स तन्नाम्नाऽधिवासनम्[3] ॥
छत्रचामरकौशेयवस्त्रोपानहपादुकाः ।
गोभिर्विभवतः सार्द्धं दद्याच्च शयनासनम्[4] ॥
आभारं[5] त्रिपलादूर्द्ध्वं शक्तितः कारयेद्बुधः ।

'भारः' पलसहस्रद्वयम् ।

1 हेमा. p. 277 अष्टाश्वं, which is noted as a variant in मत्स्य पु. p. 567

2 I. O. A. S. B, म. पु. and हेमा सकूबरम् । "कूबरो युगाधार काष्ठमिति" हेमाद्रिः । Udaipur Ms. has द्विचक्रकम् for सकूबरं

3 Mss. corrupt or defective: text restored.

4 मत्स्य. पु. शयनादिकं

5 मत्स्य. पु. अभावात् ; आभारं is noted as a variant.

अश्वाष्टकेन संयुक्तं चतुर्भिरथ वाजिभिः।
द्वाभ्यामथ युतं दद्याद्धेमसिंहसमन्वितम्[1] ॥
चक्ररक्षावुभौ तस्य तुरगस्थावथाश्विनौ।

'चक्ररक्षौ' चक्रसमीपे अश्वारूढौ अश्विनीकुमारौ कार्यौ।

पुण्यं कालं ततः प्राप्य पूर्ववत्स्नापितो द्विजैः[2] ॥
[ त्रिः प्रदक्षिणमावृत्य[3] गृहीतकुसुमाञ्जलिः।
शुक्लमाल्याम्बरो दद्यादिमं मन्त्रमुदीरयेत् ॥ ]

'नमो नमः पापविनाशनाय
विश्वात्मने वेदतुरङ्गमाय।
धाम्नामधीशाय भवाभवाय[4]
पापौघदावानल देहि शान्तिम् ॥
वस्वष्टकादित्यमरुद्गणानां
त्वमेव धाता परमं निधानम्।
यतस्ततो मे हृदयं प्रयातु
धर्मैकतानत्वमघौघनाशात्' ॥
इति तुरगरथप्रदानमेतत्
भवभयसूदनमत्र यः करोति।

1 मत्स्य. पु. p. 567 ध्वजान्विते

2 A. S. B. and I. O., बुधैः

3 [ ] Omitted in all Manuscripts: restored from मत्स्य पु. p. 567; this line is also missing in हेमा. p. 278

4 I. O. A. S. B. and हेमा. भवाभवाय ; मत्स्य. पु. reads दिवाकराय ; Udaipur Ms. reads भवाभिधीय ( sic )

स कलुषपटलैर्विमुक्तदेहः
परममुपैति पदं पिनाकपाणेः ॥
देदीप्यमानवपुषा विजितप्रभावं
आक्रम्य मण्डलमखण्डलचण्डभानोः[1] ।
सिद्धाङ्गनानयनषट्पदपीयमान-
वक्त्राम्बुजोऽम्बुजभवेन चिरं सहाऽऽस्ते ॥
इति पठति शृणोति वा य इत्थं
कनकतुरङ्गरथप्रदानमस्मिन्[2] ॥
न स नरकपुरं व्रजेत् कदाचि-
न्नरकरिपोर्भवनं प्रयाति भूयः ॥

इति हिरण्याश्वरथदानम् ॥

## अथ[3] हेमहस्तिरथदानम् (९)

तत्र मत्स्यपुराणे

अथाऽतः सम्प्रवक्ष्यामि हेमहस्तिरथं शुभम् ।
यस्य प्रसादाद्भवनं[4] वैष्णवं याति मानवः ॥

1 A. S. B., अखण्डमचण्डभानोः, a reading noted in म. पु. p. 567. The Udaipur text has अखण्डभानोः and I. O. omits the verse. The reading adopted is that of हेमा. p. 280

2 A. S. B., प्रदानमेवम्

3 A. S. B. reads हेमहस्तिरथप्रदानम्, which agrees with हेमा. p. 280., म. पु. ch. 282, p. 568 ff.

4 A. S. B., यस्य प्रदानात्

पुण्यां तिथिं समासाद्य तुलापुरुषदानवत् ।
विप्रवाचनकं कुर्याल्लोकेशावाहनं बुधः ॥

ऋत्विङ्मण्डपसम्भारभूषणाच्छादनादिकम् ।
अत्राऽप्युपोषितस्तद्वत् ब्राह्मणैः सह भोजनम्[1] ॥

कुर्यात् पुष्परथाकारं काञ्चनं मणिमण्डितम् ।
वलभीभिर्विचित्राभिश्चतुश्चक्रसमन्वितम् ॥

'पुष्परथः' स च वलभीयुक्तो भवति ।

लोकपालाष्टकोपेतं ब्रह्मार्कशिवसंयुतम् ।
मध्ये नारायणोपेतं लक्ष्मीपुष्टिसमन्वितम् ॥

कृष्णाजिने तिलद्रोणं कृत्वा संस्थापयेद्रथम् ।
तथाऽष्टादश धान्यानि भाजनाशनचन्दनः[2] ॥

दीपिकोपानहच्छत्रदर्पणं पादुकान्वितम् ।
ध्वजे तु गरुडं कृत्वा[3] कूबराग्रे विनायकम् ॥

नानाफलसमायुक्तमुपरिष्टाद्वितानकम् ।
कौशेयं पञ्चवर्णं तु अम्लानकुसुमान्वितम् ॥

चतुर्भिः कलशैः सार्द्धं गोभिरष्टभिरन्वितम् ।
चतुर्भिर्हेममातङ्गैर्मुक्तादामविभूषितैः ॥

स्वरूपतः करिभ्यां च युक्तं कृत्वा निवेदयेत्[4] ॥
कुर्याच्च त्रिपलादूर्द्ध्वमाभारादपि शक्तितः ॥

1 A. S. B., शोभनम्

2 Udaipur Ms. and A. S. B. read चन्दनैः

3 हेमा. p. 281 कुर्यात् for कृत्वा

4 Udaipur Ms. and A. S. B. निवेशयेत्

तथा मङ्गलशब्देन स्नापितो वेदपुङ्गवैः ।
त्रिः प्रदक्षिणमावृत्य गृहीतकुसुमाञ्जलिः ॥
इममुच्चारयेन्मन्त्रं ब्राह्मणेभ्यो निवेदयेत् ।

'नमो नमः शङ्करपद्मजार्क-
लोकेशविद्याधरवासुदेवैः ।
त्वं सेव्यसे [1]वेद पुराणयज्ञ-
तेजोमयस्यन्दन पाहि यस्मात् ॥
यत्तत्पदं परमगुह्यतमं मुरारेः
आनन्दहेतुगुणरूपविमुक्तमन्तः[2] ।
योगैकमानसदृशो मुनयः समाधौ
पश्यन्ति तत्वमसि नाथ रथाधिरूढ[3] ॥
यस्मात्त्वमेव भवसागरसम्प्लुतानां
आनन्दभाण्डभृतमध्वरपानपात्रम्[4] ।
तस्मादघौघशमनेन[5] कुरु प्रसादं
चामीकरेभरथमाधवसम्प्रदानात्[6]' ॥
इत्थं प्रणम्य कनकेभरथप्रदानं
यः कारयेत्सकलपापविमुक्तदेहः ।

1 हेमा. p. 282 देव for वेद; I. O., पुराणशास्त्रैः
2 I. O., यत्तत्पदं परमगुह्यमिदं तदस्तु आनन्दहेतुमुपसूय वियुक्तपापः ।
3 A. S. B., रथेऽधिरूढ
4 A. S. B. and हेमा. p. 282. आनन्दभाण्डभृतमध्वरपानपात्रम् ; I. O., धृतमध्वरपानपात्रम् ; Udaipur Ms. has भृतधरपानपात्रम्
5 I. O., तस्माद्भवौषधशमनेन
6 I. O. and A. S. B., चामीकरेभरथमाधवसम्प्रदानात् । हेमा. p. 282 साधन for माधव

विद्याधरामरमुनीन्द्रगणाभिजुष्टं
प्राप्नोत्यसौ पदमतीन्द्रियमिन्दुमौलेः ॥
कृतदुरितवितानप्रोज्वलद्वह्निजाल-
व्यतिकरहृतदेहोद्वेगभाजोऽपि बन्धून्[1] ।
नयति च पितृपुत्रान् रौरवादप्यशेषान्[2]
कृतगजरथदानः शाश्वतं [3]सद्म विष्णोः ॥

इति हेमहस्तिरथदानम्[4] ॥

## अथ पञ्चलाङ्गलदानम् (१०)

तत्र मत्स्यपुराणे[5]

अथाऽतः सम्प्रवक्ष्यामि महादानमनुत्तमम् ।
पञ्चलाङ्गलकं नाम महापातकनाशनम् ॥
पुण्यां तिथिं समासाद्य युगादिग्रहणादिकम् ।
भूमिदानं नरो दद्यात्पञ्चलाङ्गलकान्वितम् ॥
कर्वटं खेटकं चाऽपि ग्रामं वा सस्यशालिनम् ।
निवर्त्तनं शतं वाऽपि तदर्द्धं वाऽपि शक्तितः ॥

1 हेमा. p. 283 व्यतिकरकृतदाहोद्वेगभाजोऽपि बन्धून् ; I. O., भाजोप-बन्धून्

2 I. O., बान्धवानप्यशेषान्

3 I. O., धाम शम्भोः

4 Udaipur Ms., हेमहस्तिदानम्

5 cf. हेमा. p. 284 ff. and म. पु. ch. 283, p. 568–9.

सारदारुमयान् कृत्वा [1]हलान् पञ्च विचक्षणः ।
सर्वोपकरणैर्युक्तान् अन्यान् पञ्च च काञ्चनान् ॥

कर्व्वटादिस्वरूपं मार्कण्डेयपुराणे । तद्यथा—

"सोत्सेधवप्रप्राकारं सर्वतः खातकावृतम् ।
योजनार्धार्धविष्कम्भमष्टभागायतं पुरम् ॥
तदर्द्धेन तथा खेटं तत्पादेन च कर्वटम् ।
तथा [2]शूद्रजनप्रायाः सुसमृद्धकृषीवलाः ॥
क्षेत्रोपभोगभूमध्ये [3]वसतिर्ग्रामसञ्ज्ञितैः" । इति ।
'उपकरणानि' युगयोक्त्रादीनि[4] ।
वृषान् लक्षणसंयुक्तान् दशैव च धुरन्धरान् ॥
सुवर्णशृङ्गाभरणान् मुक्तालाङ्गूलभूषितान् ।
रौप्यपादाग्रतिलकान् रक्तकौशेयभूषितान्[5] ।
स्रग्दामचन्दनयुतान् शालायामधिवासयेत् ॥
पर्जन्यादित्यरुद्रेभ्यः पायसे निर्वपेच्चरुम् ।
एकस्मिन्नेव कुण्डे च चरुमस्मै निवेदयेत् ॥
पलाशसमिधस्तद्वदाज्यं कृष्णतिलांस्तथा ।

'पर्जन्यादित्यरुद्रेभ्यः' तल्लिङ्गैर्मन्त्रैः पायसचरुप्रभृतिद्र-

1 A. S. B. and हेमा. p. 284 हलान् पञ्चविचक्षणः; Udaipur Ms. has हलं रम्यं च विचक्षणः

2 हेमा. p. 284 शुद्धजान

3 I. O., संस्थितिः ग्रामसंज्ञिते

4 हेमा. p. 284 'उपकरणानि' युगयोक्त्रपालरज्जुप्राजनादीनि

5 A. S. B., भूषणान्

व्येण जुहुयात्[1] ।

तुलापुरुषवत्कुर्यात् लोकेशावाहनं बुधः ॥
ततो मङ्गलशब्देन मुक्तमाल्याम्बरो बुधः ।
आहूय द्विजदाम्पत्यं हेमसूत्राङ्गुलीयकैः ॥
कौशेयवस्त्रकटकैर्मणिभिश्च प्रपूजयेत्[2] ।
शय्यां सोपस्करां दद्याद्धेनुमेकां पयस्विनीम् ॥
तथाऽष्टादश धान्यानि समन्तादधिवासयेत् ।
ततः प्रदक्षिणं कुर्याद्गृहीतकुसुमाञ्जलिः ॥
इममुच्चारयेन्मन्त्रमथ सर्वं निवेदयेत् ।

[अथ मन्त्रः][3]

'यस्माद्देवगणाः सर्वे स्थावराणि चराणि च ।
धुरन्धराङ्गे तिष्ठन्ति तस्माद्भक्तिः शिवेऽस्तु मे[4] ॥
यस्माच्च भूमिदानस्य [5]कर्त्ता नाऽर्हति षोडश ।
दानान्यन्यानि मे भक्तिर्धर्मे एव दृढा भवेत्' ॥
दण्डेन सप्तहस्तेन त्रिंशद्दण्डान्निवर्त्तनम् ।
त्रिभागहीनं गोचर्ममानमाह प्रजापतिः[6] ॥

1 Passage corrupt, but reproduced verbtim in हेमा. p. 285
2 हेमा. p. 285 विभूषयेत्
3 हेमा. p. 286
4 I. O., रक्ष शिवानि मे
5 A. S. B. and हेमा. have कलां नार्हन्ति षोडशीम्
6 Corrected by I. O. and हेमा.

मानेनाऽनेन यो दद्यान्निवर्त्तनशतं बुधः ।
विधिनाऽनेन तस्याऽशु क्षीयते पापसंहृतिः[1] ॥
तदर्द्धमपि वा दद्यादपि गोचर्ममात्रकम् ।
भवनस्थानमात्रं वा सोऽपि पापैः प्रमुच्यते ॥

यावन्ति लाङ्गलकमार्गमुखानि भूमे-
र्भासां पतेः दुहितुरङ्गजरोमकाणि ।
तावन्ति शङ्करपुरे स समा हि तिष्ठेत्
भूमिप्रदानमिह यः कुरुते मनुष्यः ॥
गन्धर्व्वकिन्नरसुरासुरसिद्धसङ्घैः
आधूतचामरमुपेत्य महद्विमानम् ।
सम्पूज्यते पितृपितामहबन्धुयुक्तः
शम्भोः पुरं व्रजति चामरनायकस्सन्[2] ॥
इन्द्रत्वमप्यधिगतं क्षयमभ्युपैति
गोभूमिलाङ्गलधुरन्धरसम्प्रदानात् ।
तस्मादघौघपटलक्षयकारि भूमे-
र्द्दानं विधेयमतिभूतिभवोद्भवाय[3]॥

इति पञ्चलाङ्गलदानम् ॥

1 I. O., सञ्चयः
2 I. O., पूजितस्सन्
3 I. O., विधेयमपि भूतिभवोद्भवाय

## अथ[1] पृथिवीदानम् (११)

तत्र मत्स्यपुराणे[2]

अथाऽतः सम्प्रवक्ष्यामि धरादानमनुत्तमम् ।
पापक्षयकरं नृणाममङ्गल्यविनाशनम् ॥
कारयेत्पृथिवीं हैमीं जम्बूद्वीपानुकारिणीम् ।
मर्यादापर्वतवतीं मध्ये मेरुसमन्विताम् ॥
लोकपालाष्टकोपेतां नववर्षसमन्विताम् ।
मर्यादापर्वताः तावत् अष्टौ हिमवदादयः[3] ॥
नदीनदसमोपेतां सप्तसागरवेष्टिताम् ।
[ महारत्नसमाकीर्णां वसुरुद्रार्कसंयुताम् ॥
हेम्नः पलसहस्रेण तदर्धेनाऽप्यशक्तितः ।
शतत्रयेन वा कुर्यात् द्विशतेन शतेन वा[4] ॥ ]
कुर्यात्पञ्चपलादूर्द्धमशक्तोऽपि विचक्षणः ।
तुलापुरुषवत्कुर्यात् लोकेशावाहनं बुधः ।
ऋत्विङ्मण्डपसम्भारभूषणाच्छादनादिकम् ॥
वेद्यां कृष्णाजिनं कृत्वा तिलानामुपरि न्यसेत् ।
तथाऽष्टादश धान्यानि रसांश्च लवणादिकान् ॥

1 हेमा. uses the expression धरादानम् , p. 289

2 ch. 284. pp. 569-570

3 मर्यादापर्वतास्तु ब्रह्माण्डपुराणोद्धृतपद्येषु हेमाद्रिणा ( पृ. २९१ ) तमे उदाहृताः

4 I. O. and A. S. B. supply these three lines which are wanting in Udaipur Ms.

तथाऽष्टौ पूर्णकलशान् समन्तात् परिकल्पयेत् ।
वितानकं च कौशेयं [1]फलानि विविधानि च ॥
तथांऽशुकानि रम्याणि श्रीखण्डशकलानि च ।
इत्येवं रचयित्वा तानधिवासनपूर्वकम् ॥
शुक्लमाल्याम्बरधरो मुक्ताभरणभूषितः ।
प्रदक्षिणं ततः कृत्वा गृहीतकुसुमाञ्जलिः[2] ॥
पुण्यकालमथाऽऽसाद्य मन्त्रानेतानुदाहरेत्[3] ।
'नमस्ते सर्वदेवानां त्वमेव भवनं यतः ॥
धात्री च सर्वभूतानामतः पाहि वसुन्धरे ।
वसुं धारयसे[4] यस्मात् वसु चाऽतीव निर्मलम् ॥
वसुन्धरा ततो जाता तस्मात्पाहि भयादलम् ।
चतुर्मुखोऽपि नो गच्छेद्यस्मादन्तं तवाऽनघे ॥
अनन्तायै नमस्तस्मात्पाहि संसारसागरात्[5] ।
त्वमेव लक्ष्मीर्गोविन्दे शिवे गौरीति संस्थिता ॥
गायत्री ब्रह्मणः पार्श्वे ज्योत्स्ना चन्द्रे रवौ प्रभा ।
बुद्धिर्बृहस्पतौ ख्याता मेधा मुनिषु संस्थिता ॥
विश्वं व्याप्य स्थिता यस्मात्ततो विश्वम्भरा मता ।
धृतिः स्मृतिः क्षमा क्षोणी पृथ्वी वसुमती रसा ॥
एताभिर्मूर्तिभिः पाहि देवि संसारसागरात्' ।

1 I. O., रसानि
2 I. O., गृहीत्वा कुसुमाञ्जलीन्
3 I. O., उदीरयेत्
4 I. O., वसुन्धरे वसेत्
5 A. S. B., कर्दमात्

एवमुच्चार्य तां देवीं ब्राह्मणेभ्यो निवेदयेत् ॥
धरार्द्धं वा चतुर्भागं गुरवे प्रतिपादयेत् ।
शेषं चैवाऽथ ऋत्विग्भ्यः प्रणिपत्य विसर्जयेत् ॥
अनेन विधिना यस्तु दद्याद्धेमधरां शुभाम् ।
पुण्यकाले तु सम्प्राप्ते स पदं याति वैष्णवम् ॥
विमानेनाऽर्कवर्णेन किङ्किणीजालमालिना ।
नारायणपुरं गत्वा कल्पत्रयमथो वसेत् ॥
पितृपौत्रप्रपौत्रांश्च तारयेदेकविंशतिम् ॥
इति पठति य इत्थं यः शृणोति प्रसंगात्
अपि कलिकलुषवितानैर्मुक्तदेहः समन्तात् ।
दिवममरवधूभिर्याति संतर्प्यमाणः[1] ।
पदममरसहस्रैः सेवितं चन्द्रमौलेः[2] ॥

इति पृथिवीदानम् ॥

## अथ [3]विश्वचक्रदानम् (१२)

तत्र मत्स्यपुराणे

अथाऽतः संप्रवक्ष्यामि महादानमनुत्तमम् ।
विश्वचक्रमिति ख्यातं सर्वपापप्रणाशनम् ॥

1 I. O., संप्रार्थ्यमानः; So हेमा. p. 297
2 *Ibid.*
3 cf. हेमा. p. 317 ff; म. पु. ch. 285, ff. 570-1

तपनीयस्य शुद्धस्य विषुवादिषु[1] कारयेत् ।
श्रेष्ठं पलसहस्रेण तदर्द्धेन तु मध्यमम् ॥

तस्याऽर्द्धेन कनिष्ठं स्याद्विश्वचक्रमुदाहृतम् ।
अन्यद्विंशपलादूर्ध्वमशक्तोऽपि निवेदयेत् ॥

षोडशारं ततश्चक्रं [2]रत्नकुम्भाष्टकावृतम् ।
नाभिमध्ये स्थितं विष्णुं योगारूढं चतुर्भुजम् ॥

शङ्खचक्रस्य पार्श्वे तु देव्यष्टकसमावृतम् ।
द्वितीयावरणे तद्वत् पूर्वतो जलशायिनम् ॥

अत्रिर्भृगुर्वशिष्ठश्च ब्रह्मा कश्यप एव च ।
मत्स्यः कूर्मो वराहश्च नरसिंहोऽथ वामनः ॥

रामो रामश्च रामश्च बुद्धः[3] कल्की दश क्रमात् ।
तृतीयावरणे गौरी मातृभिर्वसुभिर्वृता ॥

चतुर्थे द्वादशाऽदित्या वेदाश्चत्वार एव च ।
पञ्चमे पञ्च भूतानि रुद्राश्चैकादशैव तु ॥

लोकपालाष्टकं षष्ठे दिङ्मातङ्गास्तथैव च ।
सप्तमेऽस्त्राणि[4] सर्व्वाणि मंगलानि च कारयेत् ॥
अन्तरान्तरतो देवान्विन्यसेदष्टमे पुनः ॥

'मातरो' ब्रह्माण्याद्याः । 'सप्तमेऽस्त्राणि' खड्गादीनि अष्टौ

1 I. O., विश्वचक्रं for विषुवादिषु; A. S. B. and Udaipur Ms. omit the line

2 A. S. B. and म. पु. भ्रमन्नेम्यष्टकावृतम्

3 हेमा. p. 319 कृष्णश्च for बुद्ध

4 I. O., सर्वतो

'मङ्गलानि' दक्षिणावर्त्तशङ्खादीनि । 'अन्तरान्तरतः' अन्तरालानां मध्ये ।

तुलापुरुषवच्छेषं समन्तात्परिकल्पयेत्[1] ।
ऋत्विङ्मण्डपसम्भारभूषणाच्छादनादिकम् ॥
विश्वचक्रं ततः कुर्यात् कृष्णाजिनतिलोपरि ।
तथाऽष्टादश धान्यानि रसांश्च लवणादिकान् ॥
पूर्णकुम्भाष्टकं चैव वस्त्राणि विविधानि च ।
माल्येक्षुफलरत्नानि वितानञ्चाऽपि कारयेत् ॥
ततो मङ्गलशब्देन स्नातः शुक्लाम्बरो गृही ।
होमाधिवासनान्ते तु गृहीतकुसुमाञ्जलिः ॥
इममुच्चारयेन्मन्त्रं त्रिः कृत्वा तु प्रदक्षिणम् ।
'नमो विश्वमयायेति विश्वचक्रात्मने नमः ॥
परमानन्दरूपी त्वं पाहि नः पापकर्दमात् ।
तेजोमयमिदं यस्मात् सदा पश्यन्ति योगिनः ॥
हृदि त्वां त्रिगुणातीतं विश्वचक्रं नमाम्यहम् ।
वासुदेवे स्थितं चक्रं चक्रमध्ये तु माधवः ॥
अन्योन्याधाररूपेण प्रणमामि स्थिताविह ।
विश्वचक्रमिदं यस्मात्सर्वपापहरं परम् ॥
आयुधं चाऽऽधिवासस्य [2]भवादुद्धर मामतः' ।
इत्यामन्त्र्य ततो दद्याद्विश्वचक्रं विमत्सरः ॥

1 मत्स्य. पु. p. 571

2 I. O., भयादुद्धर मामितः

विमुक्तः सर्वपापेभ्यो विष्णुलोके महीयते ।
वैकुण्ठलोकमासाद्य चतुर्बाहुः सनातनः ॥
सेव्यतेऽप्सरसां [1]सङ्घैस्तिष्ठेत्कल्पशतत्रयम् ।
प्रणमेद्वा स्वयं कृत्वा विश्वचक्रं दिने दिने ॥
तस्याऽऽयुर्वर्धते नित्यं लक्ष्मीश्च विपुला भवेत् ।

इति सकलजगत्सुराधिवासं
वितरति यस्तपनीयषोडशारम् ।
हरिभवनमुपागतः स सिद्धै-
श्चिरमधिगम्य नमस्यते शिरोभिः ॥

असुदर्शनतां प्रयाति शत्रोः
मदनसुदर्शनतां च कामिनीनाम् ।
स सुदर्शनकेशवानुरूपः
कनकसुदर्शनदानदग्धपापः ॥

कृतगुरुदुरितानि षोडशार-
प्रवरसुदर्शनदानतो निरस्य ।
व्रजति च स मुरारिधाम [2]भित्वा
भवमभितो भुवने भयानि भूयः ॥

इति विश्वचक्रदानम् ॥

1 Udaipur Ms. reads मध्ये तिष्ठेत्

2 I. O., जित्वा

## अथ [1]कल्पलतादानम् (१३)

तत्र मत्स्यपुराणे

अथाऽतः सम्प्रवक्ष्यामि महादानमनुत्तमम् ।
महाकल्पलता नाम महापातकनाशनम् ॥
पुण्यां तिथिमथाऽऽसाद्य कृत्वा ब्राह्मणवाचनम् ।
ऋत्विङ्मण्डपसम्भारभूषणाच्छादनादिकम् ॥
तुलापुरुषवत्कुर्याल्लोकेशावाहनादिकम् ।
चामीकरमयीः कुर्याद्दश कल्पलताः [2]समाः ॥
नानापुष्पफलोपेता नानांशुकविभूषिताः ।
विद्याधरसुपर्णानां मिथुनैरुपशोभिताः ॥
हारानादित्सुभिः सिद्धैः फलानि च विहङ्गमैः ।
लोकपालानुसारिण्यः कर्तव्यास्तासु देवताः ॥
ब्राह्मीमनन्तशक्तिश्च लवणस्योपरि न्यसेत् ।
अधस्ताच्च[3] तयोर्मध्ये पद्मशङ्खधरे उभे[4] ॥
इभासनस्था तु गुडे[5] पूर्वतः कुलिशायुधा ।
रजन्यजस्थिताऽऽग्नेयी स्रुवपाणिरथाऽनले ॥
'रजन्यजस्थिता' छागवाहनोपरि संस्थिता[6] ।

1 cf. हेमा. p. 324. ff ; मत्स्य. पु. ch. 286, pp. 571-2

2 A. S. B., I. O., and हेमा. give शुभाः

3 A. S. B., अधस्ताल्लतयोर्मध्ये

4 I. O. and हेमा. p. 325, करे शुभे

5 हेमा. and I. O., गुडे ; Udaipur Ms. गुदे

6 Supplied by A. S. B.

'अनले' आग्नेयदिग्भागे ।

याम्यां च महिषारूढा गदिनी तण्डुलोपरि ।
दक्षिणे नैर्ऋती स्थाप्या सखड्गा दक्षिणापरे ॥

'दक्षिणापरे' दक्षिणपश्चिमदिग्भागे ।

वारुणे वारुणीक्षीरे झषस्था नागपाशिनी[1] ।
पताकिनी च वायव्ये मृगस्था शर्करोपरि ॥
सौम्या तिलेषु संस्थाप्या शङ्खिनी निधिसंस्थिता[2] ।
माहेश्वरी वृषगता नवनीते त्रिशूलिनी ॥
मौलिन्यो वरदास्तद्वत्कर्तव्या बालिकान्विताः ।
शक्त्या पञ्चपलादूर्ध्वमासहस्रात् प्रकल्पयेत् ॥
सर्वासामुपरिष्टाच्च पञ्चवर्णं वितानकम् ।
धेनवो दश कुम्भाश्च वस्त्रयुग्मानि चैव हि ॥
मध्यमे द्वे तु गुरवे ऋत्विग्भ्योऽन्यास्तथैव च ।
ततो मङ्गलशब्देन स्नातः शुक्लाम्बरो बुधः ॥
त्रिः प्रदक्षिणमावृत्य मन्त्रानेतानुदाहरेत्[3] ।

'नमो नमः पापविनाशिनीभ्यो
ब्रह्माण्डलोकेश्वरपालिनीभ्यः ।
आशंसिताधिक्यफलप्रदाभ्यो
दिग्भ्यस्तथा कल्पलतावधूभ्यः[4] ॥

1 Supplied by A. S. B.
2 I. O., चिरसंस्थिता
3 A. S. B., I. O. and हेमा, p. 326, उदीरयेत्
4 A. S. B. and हेमा., वधूभ्यः ; Udaipur Ms. has बहुभ्यः

इति सकलदिगङ्गनाप्रदानं
भवभयसूदनकारि यः करोति ।
अभिमतफलदे स नाकलोके
वसति पितामहवत्सराणि त्रिंशत् ॥

'अभिमतफलदे' इष्टफलदायिनि ।

पितृशतमथ तारयेद्भवाब्धेः
भवदुरितौघविनाशशुद्धदेहः ।
सुरपतिवनितासहस्रसंख्यैः
परिवृतमम्बुजसंसदाऽभिवन्द्यः ॥

इति विधानमिमं सदिगङ्गना-
कनककल्पलताविनिवेदने ।
पठति यः स्मरतीह तथेक्षते
स पदमेति पुरन्दरसेवितम् ॥

इति कल्पलतादानम् ॥

## अथ [1]सप्तसागरदानम् (१४)

तत्र मत्स्यपुराणे

अथाऽतः सम्प्रवक्ष्यामि महादानमनुत्तमम् ।
सप्तसागरकं नाम सर्वपापप्रणाशनम् ॥
पुण्यं दिनमथाऽऽसाद्य कृत्वा ब्राह्मणवाचनम् ।

1 cf. हेमा. p. 327. ff ; मत्स्य. पु. ch. 287, pp. 572-3.

तुलापुरुषवत् कुर्याल्लोकेशावाहनं बुधः[1] ॥
ऋत्विङ्मण्डपसम्भारभूषणाच्छादनादिकम् ।
कारयेत्सप्त कुण्डानि काञ्चनानि विचक्षणः ॥
प्रादेशमात्राणि तथाऽरत्निमात्राणि[2] वा पुनः ।
कुर्यात्सप्तपलादूर्द्ध्वमासहस्राच्च शक्तितः ॥

'अरत्निमात्राणि' अरत्निस्वरूपं मार्कण्डेयपुराणे उक्तम्। तद्यथा—

'अरत्निरङ्गुष्ठपर्यन्ता संख्यया त्वेकविंशतिः' ।

संस्थाप्यानि च सर्वाणि कृष्णाजिनतिलोपरि ।
प्रथमं पूरयेत्कुण्डं लवणेन विचक्षणः ॥
द्वितीयं पयसा तद्वत्तृतीयं सर्पिषा पुनः ।
चतुर्थं तु गुडेनैव दध्ना पञ्चममेव च ॥
षष्ठं शर्करया तद्वत् सप्तमं तीर्थवारिणा ।
स्थापयेत् लवणस्याऽन्ते ब्रह्माणं काञ्चनं शुभम् ॥
केशवं क्षीरमध्ये तु घृतमध्ये महेश्वरम् ।
भास्करं गुडमध्ये तु दधिमध्येऽमराधिपम् ॥
शर्करायां न्यसेल्लक्ष्मीं जलमध्ये तु पार्वतीम् ।
सर्वेषु सर्वरत्नानि धान्यानि च समन्ततः ॥
तुलापुरुषवच्छेषमत्राऽपि परिकल्पयेत् ।

1 I. O., पुनः

2 A. S. B., तथाऽरत्निमात्राणि; Udaipur Ms., अरत्नमात्राणि

ततो वारुणहोमान्ते स्नापितो वेदपुङ्गवैः ॥

'वारुणहोमान्ते' वारुणहोमानन्तरम् । स च होमः सर्वविशेषान्ते कर्तव्यः ।

त्रिः प्रदक्षिणमावृत्य मन्त्रानेतानुदाहरेत्[1] ।
'नमो वः सर्वसिन्धूनामाधारेभ्यः सनातनाः ॥
जन्तूनां प्राणदेभ्यश्च समुद्रेभ्यो[2] नमो नमः ।

क्षीरोदकाज्यदधिमाधवलावणेक्षु-
सारामृतेन भुवनत्रयजीवसङ्घान् ।
आनन्दयन्ति [3]पशुभिश्च यतो भवन्तः
तस्मान्ममाऽप्यघविघातमलं दिशन्तु[4] ॥

यस्मात्समस्तभुवनेषु भवन्त एव
तीर्थामरासुरसुबद्धमणिप्रतानम्[5] ।
पापक्षयाम्बरविलेपनभूषणाय
लोकस्य बिभ्रति तदस्तु ममाऽपि लक्ष्मीः' ॥

इति ददाति रसामरसंयुतान्
सुचिरविस्मयवानिह सागरान् ।

1 A. S. B., उदीरयेत्

2 I. O. and हेमा. p. 328 समुद्रेभ्यः; Udaipur Ms. has समूहेभ्यः

3 A. S. B., I. O. and हेमा., वसुभिश्च

4 *Ibid* विदध्वं for दिशन्तु

5 *Ibid* तीर्थामरासुरसुबद्ध [ A. S. B. सरद्ध ] मणिप्रतानम् ;
Udaipur Ms. reads wrongly तीर्थामवाप्य च इमानि पुनः प्रदानात्

अमलकाञ्चनवर्णमयानसौ
पदमुपैति हरेरमरावृतः ॥
सकलपापविघातविराजितः
पितृपितामहपुत्रकलत्रकम् ।
नरकलोकसमाकुलमप्यलं
झटिति सोऽर्पयते शिवमन्दिरम् ॥

इति सप्तसागरदानम्[1] ॥

## अथ [2]रत्नधेनुदानम् (१५)

तत्र मत्स्यपुराणे

अथाऽतः सम्प्रवक्ष्यामि महादानमनुत्तमम् ।
रत्नधेनुरिति ख्यातं गोलोकफलकं नृणाम् ॥
पुण्यं [3]दिनमथाऽऽसाद्य तुलापुरुषदानवत् ।
लोकेशावाहनं कृत्वा ततो धेनुं प्रकल्पयेत् ॥
भूमौ कृष्णाजिनं कृत्वा लवणद्रोणसंयुतम् ।
धेनुं रत्नमयीं कुर्यात्सङ्कल्पविधिपूर्वकम् ॥
स्थापयेत्पद्मरागाणामेकाशीतिं मुखे बुधः ।
पद्मरागशतं सद्यो घोणायां परिकल्पयेत् ॥

'घोणा' नासिकाग्रभागः ।

1 A. S. B., इति महादानानुकीर्तने सप्तसागरदानम्
2 cf. हेमा. p. 329 ff ; मत्स्य. पु. ch. 289, pp. 573–4
3 हेमा. p. 320, पुण्यां तिथिं

ततो धेनुः प्रकल्प्या च स्वर्णं नासाग्रभागतः[1] ।
ललाटे हेमतिलकं मुक्ताफलशतं दृशोः ॥

भ्रूयुगे विद्रुमशतं शुक्ती कर्णद्वये स्थिते ॥

काञ्चनानि च शृङ्गाणि शिरो वज्रशतात्मकम् ।
ग्रीवायां [2]नेत्रपुटकं गोमेदकशतात्मकम् ॥
इन्द्रनीलशतं पृष्ठे वैदूर्य्यशतपार्श्वके ।
स्फाटिकैरुदरं तद्वत्सौगन्धिकशतात् कटिम् ॥

'स्फाटिकैरुदरं तद्वदि'ति शतसंख्यैरित्यर्थः ।

खुरा हेममयाः कार्याः पुच्छं मुक्तावलीमयम् ।
सूर्य्यकान्तेन्दुकान्तौ च घ्राणे कर्पूरचन्दनम्[3] ॥

कुङ्कुमानि च रोमाणि [4]रौप्यां नाभिं च कारयेत् ॥

गारुत्मतं तथा तद्वत् पर्य्यन्ते परिकल्पितम्[5] ।
तथाऽन्यानि च रत्नानि स्थापयेत्सर्वसन्धिषु ॥

कुर्याच्छर्करया जिह्वां गोमयं च तदात्मकम्[6] ।
गोमूत्रमाज्येन तथा दधि दुग्धं स्वरूपतः ॥

1 Supplied by A. S. B.

2 I. O., नेत्रपुटकं ; Udaipur Ms. and हेमा. p. 330, नेत्रपट्टकं

3 A. S. B., सूर्यकान्तेन करणो घ्राणे कर्पूरचन्दनम्

4 I. O., रोमान्तानि for रौप्यां नाभिं

5 I. O. thus; A. S. B. and म. पु., गारुत्मतशतं तद्वत् अपाने परिकल्पयेत्

6 हेमा. p. 330, गुडात्मकं

पुच्छाग्रे[1] चामरं दद्यात्समीपे ताम्रदोहनम् ।
कुण्डलानि च हैमानि भूषणानि च शक्तितः ॥
कारयेदेवमेवन्तु चतुर्थांशेन वत्सकम् ।
तथा धान्यानि सर्वाणि पादाश्चेक्षुमयाः स्मृताः ॥
नानाफलानि सर्वाणि पञ्चवर्णवितानकम् ।
एवं विरचनां कृत्वा तद्वद्धोमाधिवासनम् ॥
ऋत्विग्भ्यो दक्षिणां दत्वा धेनुमामन्त्रयेत्ततः[2] ।
गुडधेनुवदामन्त्र्य इदं चोदाहरेत् ततः ॥

'गुडधेनुवत्' 'या लक्ष्मी'रित्यादिमन्त्रैः[3] ।

'त्वां सर्वदेवगणधाम यतः पठन्ति
रुद्रेन्द्रविष्णुकमलासनवासुदेवाः[4] ।
तस्मात्समस्तभुवनत्रयदेवयुक्ते
मां पाहि देवि भवसागरपीड्यमानम्' ॥
आमन्त्र्य वेत्थमभितः परिवृत्य लक्ष्म्या
दद्याद्द्विजाय[5] गुरवे जलपूर्वकं ताम् ।
यः पुण्य[माप्य]दिनमत्र कृतोपवासः
पापैर्विमुक्ततनुरेति पदं मुरारेः ॥

'परिवृत्य' प्रदक्षिणीकृत्य ।

1 I. O., पुच्छान्ते

2 A. S. B. has omitted this.

3 This is reproduced by हेमा. p. 331

4 Udaipur Ms. and A. S. B., चन्द्र for विष्णु.

5 I. O., दत्वा मुनये and जलपूर्वकालम्

इति सकलविधिज्ञो[1] रत्नधेनुप्रदानं
वितरति स विमानं[2] प्राप्य देदीप्यमानम् ।
सकलकलुषमुक्तो बन्धुभिः पुत्रपौत्रैः
सह मदनसरूपः स्थानमाप्नोति[3] शम्भोः ॥

इति रत्नधेनुदानम् ॥

## अथ [4]महाभूतघटदानम् (१६)

तत्र मत्स्यपुराणे

अथाऽतः सम्प्रवक्ष्यामि महादानमनुत्तमम् ।
महाभूतघटं नाम महापातकनाशनम् ॥
पुण्यां तिथिमथाऽऽसाद्य कृत्वा ब्राह्मणवाचनम् ।
ऋत्विङ्मण्डपसम्भारभूषणाच्छादनादिकम् ॥
तुलापुरुषवत्कुर्याल्लोकेशावाहनादिकम् ।
कारयेत्काञ्चनं कुम्भं[5] महारत्नचितं[6] बुधः ॥
प्रादेशादङ्गुलशतं यावत्कुर्यात्प्रमाणतः ।
क्षीराज्यपूरितं[7] तद्वत् कल्पवृक्षसमन्वितम् ॥

1 A. S. B., निधि for विधि

2 I. O., विधानं for विमानं

3 I. O., आप्नोति ; A. S. B. and हेमा., अभ्येति

4 cf. हेमा. p. 332. ff ; म. पु. ch. 289, pp. 574-5

5 A. S. B., कुण्डं

6 I. O., रत्नान्वितं

7 I. O., आवाद्य for क्षीराज्य

पद्मासनगतांस्तद्वत् ब्रह्मविष्णुमहेश्वरान् ।
लोकपालान् महेन्द्रांश्च स्ववाहनसमास्थितान्[1] ।
वराहेणोद्धृतां तद्वत्कुर्यात्पृथ्वीं सपङ्कजाम् ॥
वरुणं चाऽऽसनगतं काञ्चनं मकरोपरि ।
हुताशनं मेषगतं वायुं कृष्णमृगासनम् ॥
तथा कामाधिपं कुर्यान्मूषकस्थं विनायकम् ।
विन्यसेद्घटमध्ये तान् वेदपञ्चकसंयुतान् ॥
ऋग्वेदस्याऽक्षसूत्रं तु यजुर्वेदस्य पङ्कजम् ।
सामवेदस्य वीणा स्याद्वेणुं[2] दक्षिणतो न्यसेत् ॥
अथर्ववेदस्य पुनः स्रुक्स्रुवौ कमलं करे ।
पुराणवेदो[3] वरदः साक्षसूत्रकमण्डलुः ॥
परितः सर्वधान्यानि चामरासनदर्पणम् ।
चामरासनदर्पाणि कारयेत्सुसमाहितः[4] ।
पादुकोपानहच्छत्रदीपिकाभूषणानि[5] च ॥
शय्यां[6] च जलकुम्भांश्च पञ्चवर्णवितानकम् ।

1 A. S. B. adds this line, which is omitted by हेमाद्रि, p. 332, but is found in म. पु. p. 574

2 हेमा. p. 333, वीणां

3 I O., वेदवेदाङ्गैः

4 Supplied by I. O.; not found in हेमा. but found in म. पु. p. 575

5 I. O., भूषणानि शुभानि च

6 I. O., सन्ध्या च जलकुण्डार्थं; A. S. B,, म. पु., and हेमा. read शय्यां च जलकुम्भांश्च; Udaipur Ms. reads wrongly सप्ततुजलकुम्भश्च

स्नात्वाऽधिवासनान्ते तु मन्त्रमेतदुदीरयेत् ॥
'नमो वः सर्वदेवानामाधारेभ्यश्चराचरे ।
महाभूतादिदेवेभ्यः शान्तिरस्तु शिवं मम ॥
यस्मान्न किञ्चिदप्यस्ति महाभूतैर्विना कृतम् ।
ब्रह्माण्डे सर्वभूतेषु तस्माच्छ्रीरक्षयाऽस्तु मे' ॥
इत्युच्चार्य महाभूतघटं यो विनिवेदयेत् ।
सर्वपापविनिर्मुक्तः प्रयाति परमां गतिम् ॥
विमानेनाऽर्कवर्णेन पितृबन्धुसमन्वितः ।
स्तूयमानोऽमरस्त्रीभिः पदमभ्येति वैष्णवम् ॥
षोडशैतानि यः कुर्यान्महादानानि मानवः ।
न तस्य पुनरावृत्तिरिह लोकेऽभिजायते[1] ॥

इति पठति य इत्थं वासुदेवस्य पार्श्वे
ससुतपितृकलत्रः संशृणोतीह सम्यक् ।
पुररिपुभवने वा[2] मन्दिरे वार्कलक्ष्मी-
श्चिरममरवधूभिर्मोदते[3] सोऽपि कल्पम् ॥

इति श्रीभट्टहृदयधरात्मजमहासान्धिविग्रहकभट्ट-
श्रीमल्लक्ष्मीधरविरचिते कृत्यकल्पतरौ
दानकाण्डे षोडशमहादानपर्व ॥

1 Udaipur Ms. has प्रजायते

2 I. O., पुनरिह भुवने वा मन्दिरे वाऽर्कलक्ष्मीः

3 Udaipur Ms., अमरपुरवधूभिः

## अथ पद्मपुराणोक्तं[1] ब्रह्माण्डदानम्

राजोवाच

विधिं ब्रह्माण्डदानस्य कृत्वा यं मोक्षभाग्भवेत्[2] ।
कालं देशं विप्रतीर्थं सर्वमेतद्वदस्व मे ॥
कृते[3] तु येन सर्वस्य फलभागी भवाम्यहम् ।
कुत्सितस्याऽस्य भावस्य मोक्षस्स्यादचिरात्तु मे ॥

वशिष्ठ उवाच

एवं श्रुत्वा ततो राजन् पुरोधास्तस्य तं द्विजः ।
ब्रह्माण्डं कारयामास सौवर्णं सर्वधातुभिः ॥
पीठं निष्कसहस्रेण पद्मं तत्र प्रकल्पयेत् ॥
तत्र ब्रह्मा तस्य मध्ये पद्मरागैरलङ्कृतः ।
सावित्र्या चैव गायत्र्या मुनिभिः ऋषिभिः सह ॥
नारदाद्यैः सुतैः सर्वैरिन्द्राद्यैश्च सुरैस्तथा ।
सौवर्णविग्रहाः सर्वे ब्रह्मणस्तु पुरस्सराः ॥
वराहरूपो भगवान् लक्ष्म्या सह सनातनः ।
नीलान्मरकतांश्चैव भूषायां तस्य कारयेत् ॥
रजतस्य च शुद्धस्य देहं रुद्रस्य कारयेत् ।
गोमेदकैस्तस्य शोभां कारयेदत्र बुद्धिमान् ॥

1 A. S. B. reads ब्रह्मपुराणे
2 I. O., मोक्षमाश्रयेत्
3 I. O., एवं श्रुत्वा कृते कर्म

मौक्तिकैश्चाऽपि सोमस्य शोभां चक्रे दिवाकरे ।
ग्रहाणां चैव सर्वेषां [1]सुवर्णानि च दापयेत् ॥
पीठात्सप्तगुणं रौप्यं रौप्यात्ताम्रं तथाविधम् ।
ताम्रात्सप्तगुणं कार्यं कांस्यपात्रं नराधिप ॥
कांस्यात्सप्तगुणं कार्यं त्रपु चैव नराधिप ।
त्रपुतः पुरतः सीसं तावल्लोहं च कारयेत् ।
सप्तद्वीपाः समुद्राश्च सप्त वै[2] कुलपर्वताः ॥
अनया संख्यया कृत्वा निपुणः शिल्पिभिः कृताः ।
या वृषानि ? च भूतानि [3]राजतानि च कारयेत् ।
वृक्षान् वनस्पतींश्चाऽत्र तृणवल्लीः सवीरुधः ॥
सर्वं प्रकल्प्य विधिवत्तीर्थे देयं विचक्षणैः ।
कुरुक्षेत्रे गयायां च प्रयागेऽमरकण्टके ॥
द्वारवत्यां प्रभासे च गङ्गाद्वारे च पुष्करे ।
तीर्थेष्वेतेषु वै देयं ग्रहणे सोमसूर्ययोः ॥
दिनच्छिद्रेषु सर्वेषु अयने दक्षिणोत्तरे ।
व्यतीपाते बहुगुणं विषुवे च विशेषतः ॥
दातव्यमेतद्राजेन्द्र विचारं नैव कारयेत् ।
बालाग्निहोत्रिणं विप्रं सुरूपं च गुणान्वितम् ॥
सपत्नीकं च सम्पूज्य भूषयित्वा तु भूषणैः ।
पुरोहितं मुख्यतमं कृत्वाऽन्ये च तथा द्विजाः ॥

1 A. S. B. and I. O., सर्ववर्णानि कारयेत्
2 I. O., सप्तैव
3 I. O., राजतान्येव

चतुर्दश गुणोपेताः सपत्नीका निमन्त्रिताः ।
ईहितं चरमस्था च स्रग्विणश्च विभूषिताः ॥
अङ्गुलीयकानि तथा कर्णवेष्टांश्च दापयेत् ।
एवंविधांश्च सम्पूज्य तेषामग्रे स्वयं स्थितः ॥
अष्टाङ्गप्रणिपातेन प्रणम्य च पुनः पुनः ।
पुरोहिताय पुरतः कृत्वा वै करसम्पुटम् ॥
'यूयं वै ब्राह्मणाः प्रीता मैत्रत्वेनाऽनुगृह्यत ।
सौमुख्येनेह भवतां भवेत्पूतो नरः स्वयम् ॥
भवतां प्रीतियोगेन स्वयं प्रीतः पितामहः ।
ब्रह्माण्डेन तु दत्तेन तोषयेच्च जनार्दन ॥
पिनाकपाणिर्भगवान् शक्रश्च त्रिदशेश्वरः ।
एते वै तोषमायान्ति अनुध्याता द्विजोत्तमैः' ॥
एवं स्तुत्वा ततो राजा ब्राह्मणान् वेदपारगान् ।
ब्रह्माण्डं तु गुरोः प्रादात् सविधानं पुनः क्षणात् ॥
सर्वकामैस्ततस्तृप्तो ययौ स्वर्गं नराधिपः ।
तेनाऽपि गुरुणा तच्च विभक्तो ब्राह्मणैः सह ॥
दत्तस्तैरपि चाऽन्येभ्यो ब्रह्माण्डांशो नराधिप ।
ब्रह्माण्डभूमिदानं च ग्राह्यं नैकेन तद्भवेत् ॥
गृह्णन् दोषमवाप्नोति ब्रह्महत्यां न संशयः ।
सर्वेषां चैव प्रत्यक्षं दातव्यं तन्नराधिप ॥
दीयमानं च पश्यन्ति तेऽपि पूता भवन्ति हि ।
दर्शनादेव ते पूता भवेयुर्नाऽत्र संशयः ॥
भीमद्वादशी या प्रोक्ता स्वर्णनाभं मृगाजिनम् ।

एतानि गत्वा पश्यन्ति दृष्टैरेतैः क्रियाफलम् ।
अयत्नादेव लभ्येत कर्तुश्चैव सलोकता[1] ॥

इति पद्मपुराणोक्तब्रह्माण्डदानम् ॥

## अथ कालिकापुराणोक्तगोसहस्रदानम्

तत्र कालिकापुराणे

अतः परं स्मृतं दानं येन रोहन्ति देहिनः ।
दुर्लभं तत्परं धाम तृप्ताः कामैरशेषतः ॥
सहस्रं तु सवत्सानां धेनूनां च शिवाय वै ।
स्नानार्थं विधिवद्दद्यात्सोऽपि तत्पदमाप्नुयात् ॥
तद्गोसहस्रक्षीरेण तथा दध्ना च शङ्करम् ॥
सर्पिषा च समग्रेण[2] स्नाप्य वाद्यादिमङ्गलैः ।
दद्यात्सदक्षिणं[3] रौक्मं लिङ्गं सम्पूज्य यत्नतः ॥

'रौक्मं' सौवर्णम् ।

तदन्ते वाऽथ पुष्पैस्तु आपीठान्तं सुशोभितम् ।
वितानहेमघण्टादीन् युगांश्चैव निवेदयेत् ॥
'आपीठान्तं पुष्पैः' पूजयेदिति शेषः[4] ।

1 A. S. B. and Udaipur Ms. read : आयान्तो देवलक्षेत्रकर्तुश्चैव सलोकता

2 I. O., सहस्रेण

3 A. S. B. and Udaipur Ms., सरसिजं

4 I. O. and A. S. B., पद्यपुष्पैः पूरयेत् इति शेषः

दीपदर्पणनैवेद्यं हेमदण्डं च चामरम् ॥
अग्निं सन्तर्प्य चाऽऽज्येन मन्त्रविच्छ्रोत्रियेण च ।
हेमवस्त्रसुयुग्मेन भूषितेन द्विजेन वै ॥

'आज्येने'त्यादि आज्येन द्रव्येण । 'श्रोत्रियेण' ऋत्विग्भूतेन सन्तर्पयेदित्यर्थः । 'हेमवस्त्रसुयुग्मेने'ति हेम्ना शोभनवस्त्रयुग्मेनेत्यर्थः ।

ततो ब्रह्मरवेणैव शुक्ला गौस्तत्र या शुभा ।
वितानं चोच्छ्रयेत्तस्यां गच्छेत्प्राग्दक्षिणां दिशम् ॥
हराय चाऽपराः सर्वा गावस्तदनु चालयेत्[1] ।
मण्डिता हेमवस्त्राद्यैर्महावादित्रनिस्वनैः ॥
प्रदक्षिणं ततो देवं कृत्वा गावस्तदग्रतः ।
स्थापयित्वा तु ताः सर्वा यजमानः प्रदक्षिणम् ॥
सुरभी या च या मुख्या तस्यास्त्वग्रे च कारयेत् ।
सर्वं तद्गोसहस्रन्तु महाब्रह्मरवेण वै ॥
ततस्तु पुच्छमादाय तिलहोमयवाक्षतैः[2] ।
[मुख्योदरसहस्राभ्यां शङ्कराय निवेदयेत् ॥

'यवाक्षतैः' अक्षतयवैः ।

ततस्त्वेकादशभ्यस्तु ब्राह्मणेभ्यस्तथाऽपराः[3] ] ।
गावो वत्सान्विता दद्यात्तेभ्यो देयं विचिन्त्य च ॥

1 I. O. and A. S. B. supply these two verses.

2 Udaipur Ms. has ब्राह्मणभ्यस्तथाऽपराः

3 [ ] Corrupt: lacuna in Udaipur Ms. supplied by A. S. B. and I. O.

अव्रतान् सुव्रतांस्तत्र ब्राह्मणांश्च विशेषतः।
दीनान्धदुःखितांश्चैव भोजयेदनिवारितान्[1] ॥
विधिनाऽनेन भक्त्या च स्वर्जिता गोसवेन तु।
उद्दिश्य शङ्करं देवं मुच्यते भवबन्धनात् ॥

'स्वर्जिद्गोसवौ' दृष्टान्तः।

अथवाऽन्यप्रकारेण दद्याद्गोशतमुत्तमम् इति।

'शत'शब्दो बहुवाची स चाऽत्र सहस्रपरः। अग्रे सहस्रपरविनियोगदर्शनात्।

एकादशाधिकं रुद्रे चिच्छक्तायाऽमिताय च।
सम्पूर्णं पूर्ववत् कृत्वा विधिमादौ प्रयत्नतः ॥
होमपूजादिसंयुक्तं दद्यात्तत्रैव शम्भवे।
दीक्षितानां शतं ह्येकमाहृत्य शिवमन्दिरे[2] ॥
ततः पूज्य यथान्यायं दद्यात्तेभ्यो यथा शृणु।
दशकं दशकं चैव एकैकस्य पृथक् पृथक् ॥
हृदि शम्भुं गवां चैव ध्यात्वा तेषां निवेदयेत्।
अधिकं दशकं यत्र नीलकण्ठेन्दुशेखरम् ॥
दद्यात्पूर्वविधानेन धेनूनां च सवत्सकम्।

'दीक्षितानां शत' मित्यादि। शम्भुप्रीतये शम्भुं हृदि ध्यात्वा दीक्षितानां सम्प्रदानभूतानां दद्यादित्यर्थः। 'पूर्वविधानेन' क्षीरादिस्नपनविधानेन।

1 I. O., अविचारतः
2 I. O., मण्डपे

अथवा श्रोत्रियान् विप्रान् वेदवेदाङ्गपारगान् ।
आहूत्य द्विगुणांस्तेभ्यः पञ्च पञ्च ददेत्सुधीः ॥
कृत्वा विधिमिमं जन्तुर्न शोच्यः स्यात्कदाचन ।
गर्भागारज्वरे भूयः परिक्रमति नैव सः ॥

'गर्भागारज्वरे' गर्भवासक्लेशे ।

इति कालिकापुराणोक्तगोसहस्रदानम् ॥

## अथाऽऽदित्यपुराणोक्तगोसहस्रदानम्[1]

अथ प्रयच्छेद्विप्रेषु गोसहस्रं महामुने ।
अर्चयेद्गन्धपुष्पैश्च[2] पट्टैः सर्वाः समर्चयेत् ॥

'पट्टैः' वस्त्रैः ।

सर्वाः कनकशृङ्गाभाः सर्वा रौप्यखुरार्चिताः ।
सर्वाः प्रदक्षिणीकृत्य प्रयच्छेत्तद्विजातिषु[3] ॥
सुवर्णशृङ्गरचिता वस्त्राभरणभूषिताः ।
हीनाङ्गा न ददेद्गावः कृशा वृद्धातुरास्तथा ॥
एकां गामर्चयेत्तासां शेषाणां च विधिं शृणु ।
तिलानां तु शतं [4]ह्येकं दद्याद्विप्रेषु दक्षिणाम् ॥
पाद्येन[5] विधिना चैव तर्पयित्वा द्विजांस्तथा ।

1 cf. हेमाद्रि–दान., pp. 263–264.

2 A. S. B. and हेमा. read पुष्पैस्तु

3 हेमा., p. 263, omits this line and the next.

4 I. O., A. S. B. and हेमा., ह्येषां

5 Udaipur Ms., याज्येन

'तिलानां शतं' तिलद्रोणशतमित्यर्थः। 'पाद्येन' पाद्यार्घादिना[1]।

शुचिः शुद्धमना भूत्वा योऽर्चयेच्च जनार्दनम्।
प्रणम्य शिरसा देवं दत्वा गावश्च सत्वरम्॥
तेन ता अर्चिताः सर्वा भविष्यन्ति न संशयः।
वेदशास्त्रार्थतत्वज्ञाः संहिताध्यापका द्विजाः॥
अग्निहोत्ररता ये च स्वाध्यायनिरताश्च ये।
एतान् विप्रान् परीक्षेत गोप्रदाने महामुने॥
ईदृशानां च यद्दत्तं तच्चाऽनन्तमिहोच्यते।
अनन्तस्य तदा दानमिति सत्यं महामुने॥
उपोष्य विधिवच्चैव प्रसन्नमनसेन्द्रियः।
उपेत्य [2]ब्राह्मणान् पश्येत् दद्याद्गावश्च सत्वरः॥
तर्पयित्वा च ता गावः प्रणिपातेन पूजयेत्[3]।
स्पर्शयित्वा तु ता गावः सुमनास्सुसमाहितः[4]॥

'स्पर्शयित्वा' दत्वा।

न चैतास्ताडयेद्दण्डैर्न हस्तेन न लेष्टुना।
यथोक्तं गोसहस्रं तु यः प्रयच्छति वै द्विजः।
सर्वान् क्लेशान् परित्यज्य विष्णुलोके महीयते॥

1 हेमा. repeats this, p. 263

2 I. O., A. S. B. and हेमा., ब्राह्मणेभ्य

3 Omitted in हेमा.

4 I. O., A. S. B. and हेमा

तथा[1]

तिलानां च शतं यस्तु विना गोभ्यः प्रयच्छति ।
पलमेकं सुवर्णस्य गोसहस्राद्विशिष्यते ॥
यथोक्तं गोसहस्रं तु प्रयच्छेत्तु द्विजातिषु ।
तत्फलं लभते दाता सद्यः पापात्प्रमुच्यते ॥
यस्तु पश्यति पापात्मा सोऽपि पापात्प्रमुच्यते ।
एकविंशतिमुद्धृत्य ये च पूर्वे व्यवस्थिताः ॥
तारयन्ति नराः क्षिप्रं कुलान्येकोत्तरं शतम् ।
अलाभे गोसहस्रस्य सुवर्णं दातुमर्हति ॥
सहस्रार्द्धं शतं न्यूनं द्विजानां च तिलैः सह ।
तथा च लभते नित्यं सम्पूर्णं द्विजसत्तम ।
अर्चितानां सहस्राणां फलं प्राप्नोति मानवः ॥
सम्पूर्णदक्षिणं विप्र गोसहस्रं प्रकीर्तितम् ।
तिलानां तु शतं ह्येकं गवां दानेन तत्समम् ॥

'सहस्रार्द्धं' सुवर्णस्य षोडशमाषपरिमितस्येति शेषः[2] ।

इत्यादित्यपुराणोक्तगोसहस्रदानम् ॥

## अथ [3]महाभारतोक्तगोसहस्रदानम्

गवां सहस्रदः प्रेत्य नरकं नैव पश्यति ।

1 हेमा. p. 264

2 Reproduced by हेमाद्रि. p. 264

3 हेमा. p. 564

सर्वत्र विजयं चाऽपि लभते मनुजाधिप ॥
दशगोसहस्रदो नित्यं शक्रेण सह मोदते ।
अक्षयान् लभते लोकान्नरः शतसहस्रदः ॥

सुवर्णशृङ्गैस्तु विराजितानां
गवां सहस्रस्य पुनः प्रदाता ।
प्राप्नोति लोकं दिवि देवलोक-
मित्येवमाहुर्मुनिदेवसङ्घाः ॥

इति त्रिप्रकारगोसहस्रदानम् ॥

# ५

# अथ पर्वतदानानि

तत्र मत्स्यपुराणे[1]

उमापतिरुवाच

मेरोः प्रदानं वक्ष्यामि दशधा मुनिसत्तम ।
यत्प्रसादान्नरो लोकान् प्राप्नोति सुरपूजितान् ॥
पुराणेषु च वेदेषु यज्ञेष्वायतनेषु च ।
न तत्फलमधीतेषु कृतेष्विव यदश्नुते ॥
तस्माद्विधानं वक्ष्यामि पर्वतानामनुत्तमम् ।
प्रथमो धान्यशैलः स्यात् द्वितीयो लवणाचलः ॥
गुडाचलस्तृतीयस्तु चतुर्थो हेमपर्वतः ।
पञ्चमस्तिलशैलः स्यात् षष्ठः कार्पासपर्वतः ॥
सप्तमो घृतशैलश्च रत्नशैलस्तथाऽष्टमः ।
राजतो नवमस्तद्वद्दशमः शर्कराचलः ॥
वक्ष्ये विधानमेतेषां यथावदनुपूर्वशः ।

## धान्याचलदानम् (१)

अयने विषुवे पुण्ये व्यतीपाते दिनक्षये ।

1 हेमा., p. 335, cites this passage, from पद्मपुराण and begins : पुलस्त्य उवाच

शुक्लपक्षे तृतीयायामुपरागे शशिक्षये ॥
विवाहोत्सवयज्ञे वा द्वादश्यामथवा पुनः ।
शुक्लायां पञ्चदश्यां वा पुण्यर्क्षे च विधानतः ॥
धान्यशैलादयो देया यथाशास्त्रविधानतः ।
गोमयेनोपलिप्तायां यथाशास्त्रविधानतः[1] ॥
तीर्थे वाऽऽयतने वाऽपि गोष्ठे वा भवनाङ्गणे ।
मण्डपं कारयेद्भक्त्या चतुरस्रमुदङ्मुखम् ॥
प्रागुदक्प्रवणं तद्वत्प्राङ्मुखं वा विधानतः ।
गोमयेनाऽनुलिप्तायां भूमावास्तीर्य वै कुशान् ॥
तन्मध्ये पर्वतं कुर्यात् विष्कम्भैः पर्वतैर्युतम् ।
धान्यद्रोणसहस्रेण भवेद्गिरिरिहोत्तमः ॥
मध्यमः पञ्चशतकैः कनिष्ठस्स्यात्त्रिभिः शतैः ॥

'द्रोणः' प्रमाणस्थकरचरणस्य पुंसो द्वादशभिः प्रसृतिभिः कुडवो भवति । अनेन कुडवेन चतुर्गुणोत्तरं प्रस्थाढकद्रोणा भवन्ति । अतश्चतुष्षष्ठ्या कुडवैरेको द्रोणो भवति[2]।

मेरुर्महाव्रीहिमयस्तु मध्ये
सुवर्णवृक्षत्रयसंयुतः स्यात् ।
पूर्वेण मुक्ताफलवज्रयुक्तो
याम्येन गोमेदकपुष्परागैः ॥

1 Omitted by हेमा. p. 336 ; I. O. reads यथाशास्त्रविधानतः; Udaipur Ms. has यथा शुद्धविधानतः

2 The entire passage is cited by हेमाद्रि, p. 337, who ends this quotation with the words:
"इति कल्पतरुणा व्याख्यातम्"

'वृक्षत्रय' इति शर्कराचले त्रयो वृक्षा वक्ष्यमाणा मन्दारपारिजातकल्पपादपाः[1] ।

पश्चाच्च गारुत्मतनीलरत्नैः
सौम्येन वैडूर्यसरोजरागैः ।
श्रीखण्डखण्डैरभितः प्रवाल-
लतान्वितः शुक्तिशिलातलः स्यात् ॥
ब्रह्माऽथ विष्णुर्भगवान् पुरारिः[2]
दिवाकरोऽप्यत्र हिरण्मयः स्यात् ।
मूर्द्धव्यवस्था गतमत्सरेण
कार्यस्त्वनेके[3] च पुनर्द्विजौघाः ॥

'मूर्द्धव्यवस्था'[4] उपरिदेशास्थितिः । 'द्विजौघाः': पक्षिसमूहाः । ते च सौवर्णाः, हिरण्मयत्वस्य प्रकृतत्वात् ।

चत्वारि शृङ्गाणि च राजतानि
नितम्बभागेष्वपि राजतः स्यात् ।
तथेक्षुवंशावृतकन्दरस्तु[5]
घृतोदकः प्रस्रवणश्च दिक्षु ॥
शुक्लाम्बराण्यम्बुधरावली स्यात्
पूर्वेण पीतानि च दक्षिणेन ।

1 हेमा. p. 337: "वृक्षत्रयसंयुत इति" । दक्षिणे मन्दारः, उत्तरे पारिजातः, मध्ये कल्पतरुः इति वृक्षत्रयम्"

2 I. O., मुरारिः for पुरारिः

3 हेमा. p. 337, has सुवर्णेन for त्वनेके

4 हेमा. p. 337–338 repeats these explanations

5 A. S. B. and हेमा., आर्द्रेक्षु for तथेक्षु

वासांसि पश्चादथ कर्बुराणि
रक्तानि चैवोत्तरतो घनाली ॥

इक्षुरेव वंशः । घृतमेवोदकम् । वासांस्येव मेघाः । 'घनाली' मेघमाला ।

रौप्यान् महेन्द्रप्रमुखानथाऽष्टौ
संस्थाप्य लोकाधिपतीन् क्रमेण ।
नानाफलाली[1] च समन्ततस्स्यात्
मनोरमं माल्यविलेपनश्च ॥
वितानमेवोपरि[2] पश्चवर्ण-
मम्लानपुष्पाभरणं सितं वा ।
इत्थं निवेश्याऽमरशैलमग्र्यं
मेरोस्तु विष्कम्भगिरीन् क्रमेण ॥
तुरीयभागेन चतुर्दिशं तु
संस्थापयेत्पुष्पविलेपनाढ्यान्[3] ॥
पूर्वेण मन्दरमनेकफलैश्च युक्तं
युक्तं गणैः कनकभद्रकदम्बचिह्नम् ।
कामेन काश्चनमयेन विराजमानं
आकारयेत्कुसुमवस्त्रविलेपनाढ्यम् ॥

'मन्दरोऽपि' व्रीहिमय एव ।

1 I. O. and A. S. B., फलानि

2 हेमा. p. 337, वितानकं चोपरि

3 A. S. B., विलेपनाढ्यं

क्षीरारुणोदसरसाऽथ वनेन चैव
रौप्येण शक्तिघटितेन विराजमानम् ।
याम्येन गन्धमदनश्च निवेशनीयो
गोधूमसञ्चयमयः कलधौतजम्ब्वा ॥

'क्षीरारुणोदसरसा' क्षीरपूरितेनाऽरुणोदसंज्ञकेन तडागेन। 'वनेनाऽपि' रूप्यघटितेन। 'गन्धमदनः' गन्धमादनः। 'कलधौतजम्ब्वा' सुवर्णजम्बूवृक्षेण ।

हैमेन यक्षपतिना घृतमानसेन
वस्त्रैश्च राजतवनेन च संयुतस्स्यात् ।
पश्चात्तिलाचलमनेकसुगन्धिपुष्प-
सौवर्णपिप्पलहिरण्मयहंसयुक्तम् ॥

'घृतमानसेन' घृतकल्पितमानससरसा । 'पश्चात्' पश्चिमदेशे ।

आकारयेद्रजतपुष्पवनेन तद्वत्
वस्त्रान्वितं दधिसितोदसरस्तथाऽग्रे ।
संस्थाप्य तं विपुलशैलमथोत्तरेण
शैलं सुपार्श्वमपि माषमयं सवस्त्रम् ॥

'विपुलशैलं' नाम पर्वतम् ।

पुष्पैश्च हेमवटपादपशेखरं तं
आकारयेत् कनकधेनुविराजमानम् ।
माक्षीकभद्रसरसा च वनेन तद्वत्
रौप्येण भास्करवता च युतं विधाय ॥

होमैश्चतुर्भिरथ वेदपुराणविद्भिः
दान्तैरनिन्द्यचरिताकृतिभिर्द्विजेन्द्रैः ।
पूर्वेण हस्तमितमत्र विधाय कुण्डं
कार्यस्तिलैर्यवघृतेन समित्कुशैश्च[1] ॥
रात्रौ च जागरमनुद्धतगीततूर्यै-
रावाहनं च कथयामि शिलोच्चयानाम् ॥
[2]'त्वं सर्वदेवगणधाम निधेर्विरुद्ध-
मस्मद्गृहेष्वमरपर्वत नाशयाऽऽशु ।
क्षेमं विधत्स्व कुरु शान्तिमनुत्तमां नः
सम्पूजितः परमभक्तिमता मया हि[3] ॥
त्वमेव भगवानीशो ब्रह्मा विष्णुर्दिवाकरः ।
मूर्तामूर्तपरं बीजमतः पाहि सनातन ॥
यस्मात्त्वं लोकपालानां विश्वमूर्तेश्च मन्दिरम् ।
रुद्रादित्यवसूनां च तस्माच्छान्तिं प्रयच्छ मे ॥
यस्मादशून्यममरैर्नारीभिश्च [4]'शिरस्तव ।
तस्मान्मामुद्धराऽशेषदुःखसंसारसागरात्' ॥
एवमभ्यर्च्य[5] तं मेरुं मन्दरं चाऽभिपूजयेत् ।
'यस्माच्चैत्ररथेन त्वं भद्राश्वप्रमुखेन च[6] ।

1 हेमा. pp. 339–340
2 मेरोरावाहनमन्त्राः इति हेमाद्रौ, p. 340
3 Omitted in A. S. B.
4 हेमा. p. 341, समस्तथा for शिरस्तव
5 A. S. B., एवमामन्त्र्य
6 हेमा., भद्राश्वेन वर्षेण च ; I. O., मन्त्राश्च वर्षणे च

शोभसे मन्दर क्षिप्रमलं तुष्टिकरो[1] भव ॥
यस्माच्चूडामणिर्जम्बुद्वीपे त्वं गन्धमादन ।
गन्धर्ववनशोभावानतः कीर्तिर्दृढाऽस्तु मे ॥
यस्मात्त्वं केतुमालेन वैभ्राजेन वनेन च ।
हिरणमयश्चाल्पशिखरः[2] तस्मात्पुष्टिर्ध्रुवाऽस्तु मे' ॥

अनेन मन्त्रेण विपुलपर्वतमन्त्रणम् ।

उत्तरैः कुरुभिर्यस्मात् सावित्रेण वनेन च ।
सुपार्श्व राजसे नित्यं अतः श्रीरक्षयाऽस्तु मे[3] ॥
एवमामन्त्र्य तान् सर्वान् प्रभाते विमले पुनः ।
स्नात्वाऽथ गुरवे दद्यान्मध्यमं पर्वतोत्तमम् ॥
विष्कम्भपर्वतान् दद्यादृत्विग्भ्यः क्रमशो मुने ।
गावश्च दद्याच्चतुर्विंशदथवा दश शक्तितः[4] ॥
अथवा सप्त चाऽष्टौ वा पञ्च दद्यादशक्तिमान् ।
एकां गां गुरवे दद्यात्कपिलां च पयस्विनीम् ॥
पर्वतानामशेषाणामेष एव विधिः स्मृतः ।
त एव पूजने मन्त्राः त एवोपस्कराः स्मृताः ॥
ग्रहाणां लोकपालानां ब्रह्मादीनां च सर्वदा ।
स्वमन्त्रेण च सर्वेषु होमः शैलेषु पठ्यते ॥
उपवासो भवेन्नित्यं अशक्तौ नक्तमिष्यते ।

1 हेमा. p. 341, पुष्टिकरो
2 A. S. B and हेमा., हिरण्मयाश्वत्थशिखरः
3 I. O., सुपार्श्व यशसे नित्यं अतः पाहि क्षमस्व मे
4 हेमा., p. 341, पार्थिव for शक्तितः

विधानं सर्वशैलानां क्रमशः शृणु नारद ॥
दानकाले च ये मन्त्राः पर्वतेषु च यत्फलम्[1] ।
'अन्नं ब्रह्म यतः प्रोक्तमन्नं प्राणाः प्रकीर्तिताः ।
अन्नाद्भवन्ति भूतानि जगदन्नेन वर्तते ॥
अन्नमेव यतो लक्ष्मीरन्नमेव जनार्दनः ।
धान्यपर्वतरूपेण पाहि तस्मान्नमो नमः' ॥
अनेन विधिना यस्तु दद्यादन्नमयं गिरिम् ।
मन्वतरशतं साग्रं[2] देवलोके महीयते ॥
अप्सरोरगन्धर्वैराकीर्णेन[3] विराजता ।
विमानेन दिवः पृष्ठमायाति ऋषिसेवितः[4] ॥
कर्मक्षयाद्राजराज्यं प्राप्नोतीह न संशयः[5] ।

इति धान्याचलदानम् ॥

1 These lines are omitted by Udaipur Ms. and are supplied by A. S. B. and I. O.; हेमा., p. 342, reads सर्वशः for सर्वदा, पार्थिव for नारद, and दानकालेषु

2 I. O., मन्वन्तरयुगं साग्रं ; हेमा. p. 343 reads मन्वन्तशतं सार्धं

3 I. O., अप्सरोगण for अप्सरोरग ; so also हेमा. p. 343.

4 हेमा. p. 343, सुरसेवितः

5 I. O. reads instead ; कल्पान्ते तु भवेद्राजा राज्यं प्राप्नोत्यसंशयम्

## अथ लवणाचलदानम्(२)

तत्र मत्स्यपुराणे[1]

अथाऽतः सम्प्रवक्ष्यामि लवणाचलमुत्तमम् ।
यत्प्रदानान्नरो लोकं प्राप्नोति शिवसंयुतम्[2] ॥
उत्तमः षोडशद्रोणः कर्तव्यो लवणाचलः ।
मध्यमः स्यात्तदर्द्धेन चतुर्भिरधमः स्मृतः ॥
[3]वित्तहीनो यथाशक्त्या द्रोणादर्द्धं तु कारयेत् ।
चतुर्थांशेन विष्कम्भपर्वतान् कारयेत्पृथक् ॥
विधानं पूर्ववत् कुर्याद्ब्रह्मादीनां च सर्वदा ।
तद्वद्धेममयान्सर्वान् लोकपालान् निवेशयेत् ॥
सरांसि कामदेवादीन् तद्वच्चाऽत्र निवेशयेत् ।
कुर्याज्जागरमत्राऽपि दानमन्त्रं निबोधत ॥
'सौभाग्यरससम्भूतो यतोऽयं लवणो रसः ।
तदात्मकत्वेन च मां पाहि पापान्नगोत्तम ॥
यस्मादन्नरसाः सर्वे उत्कटा लवणं विना[4] ।
प्रियं च शिवयोर्नित्यं तस्माच्छान्तिं प्रयच्छ मे ॥
विष्णुदेहसमुद्भूतं यस्मादारोग्यवर्द्धनम् ।
तस्मात्पर्वतरूपेण पाहि संसारसागरात्' ॥

1 हेमा. p. 346 ff.
2 Udaipur Ms. and A. S. B., शिवपूजितं
3 I. O. is corrupt through out this section.
4 Udaipur Ms. and हेमा. p. 347 read नोत्कटा. The text follows A. S. B. as it gives a better sense.

अनेन विधिना यस्तु दद्याल्लवणपर्वतम्[1] ।
उमालोके वसेत्कल्पं ततो याति परां गतिम् ॥

इति लवणाचलदानम् ॥

## अथ [2]गुडपर्वतदानम् (३)

तत्र मत्स्यपुराणे

अथाऽतः सम्प्रवक्ष्यामि गुडपर्वतमुत्तमम् ।
यत्प्रदानान्नरः श्रीमान् स्वर्गमाप्नोति पूजितः[3] ॥
उत्तमो दशभिर्भारैर्मध्यमः पञ्चभिर्मतः ।
त्रिभिर्भारैः[4] कनिष्ठस्स्यात्तदर्द्धेनाऽल्पवित्तवान् ॥
तद्वदामन्त्रणं पूजा [5]होमवृक्षसुरार्चनम् ।
विष्कम्भपर्वतांस्तद्वत्सरांसि वनदेवताः ॥
होमजागरणं तद्वत् लोकपालाधिवासनम् ।
धान्यपर्वतवत् कुर्यादिमं मन्त्रमुदीरयेत् ॥
'यथा देवेषु विश्वात्मा प्रवरोऽयं जनार्द्दनः ।
सामवेदस्तु वेदानां महादेवस्तु योगिनाम् ॥
प्रणवः [6]सर्वमन्त्राणां नारीणां पार्वती यथा ।

1 I. O., दद्यादुभयं गिरिम्
2 cf. हेमा. p. 347 ff.
3 हेमा. p. 347 reads : यत्प्रदानान्नरः स्वर्गमाप्नोति सुरपूजितम् ।
4 'भारः' परिभाषायां व्याख्यातः हेमा. p. 347
5 A. S. B., फलवृक्ष
6 Udaipur Ms. reads : सर्वदेवानां

तथा रसानां प्रवरः सदैवेक्षुरसो मतः ॥
मम तस्मात्परां लक्ष्मीं ददस्व गुडपर्वत ।
निवासश्चाऽपि पार्वत्यास्तस्मान्मां पाहि सर्वदा"[1] ॥
अनेन विधिना यस्तु दद्याद्गुडमयं गिरिम् ।
पूज्यमानः स गन्धर्वैर्गौरीलोके महीयते[2] ॥
पुनः[3] कल्पशतान्ते तु सप्तद्वीपाधिपो भवेत् ।
आयुरारोग्यसम्पन्नः[4] शत्रुभिश्चाऽपराजितः ॥

इति गुडपर्वतदानम् ॥

## अथ [5]कनकाचलदानम् (४)

तत्र मत्स्यपुराणे

अथ पापहरं वक्ष्ये सुवर्णाचलमुत्तमम् ।
यस्य प्रसादाद्भवनं[6] निर्वैरं याति मानवः ॥

1 This and six preceding lines are omitted by I. O.

2 I. O., स्वर्गलोके वसेदतः

3 I. O., पुनर्मर्त्यगतः सोऽथ

4 I. O., अरोगः सर्वसंपन्नः

5 A. S. B. and I. O., have: सुवर्णाचलदानम्, which हेमा., p. 350, also adopts.

6 I. O. and हेमा., प्रसादाद्भवनं; Udaipur Ms. reads भुवनं; I. O. reads वैरिञ्चं for निर्वैरं, which harmonises with भुवनम्

उत्तमः पलसाहस्रो मध्यमः पञ्चभिः शतैः ।
तदर्द्धेनाऽधमस्तद्वत्[1] अल्पवित्तोऽपि शक्तितः ॥
दद्यादेकपलादूर्द्ध्वं यथाशक्त्या विमत्सरः[2] ।
धान्यपर्वतवत् सर्वं विदध्यान्मुनिपुङ्गव ॥
विष्कम्भशैलास्तद्वच्च ऋत्विग्भ्यः प्रतिपादयेत् ।
'नमस्ते ब्रह्मगर्भाय ब्रह्मबीजाय वै नमः ॥
यस्मादनन्तफलदस्तस्मात्पाहि शिलोच्चय ।
यस्मादग्नेरपत्यं त्वं [3]तस्मात्तेजो जगत्पतेः ॥
हेमपर्वतरूपेण तस्मात्पाहि नगोत्तम' ।
अनेन विधिना यस्तु दद्यात्कनकपर्वतम् ॥
स याति परमं [4]स्थानं ब्राह्ममानन्दकारकम् ।
तत्र कल्पशतं तिष्ठेत्ततो याति परां गतिम् ॥

इति कनकाचलदानम् ॥

## अथ [5]तिलाचलदानम् (५)

तत्र मत्स्यपुराणे[6]

अथाऽतः सम्प्रवक्ष्यामि तिलशैलं विधानतः ।

1 A. S. B., तदर्द्धावरतस्तद्वत्; I. O., तदर्द्धेन च यस्तद्वत्
2 I. O., विमर्शतः
3 हेमा. p. 351, यस्मात्पुण्यं
4 हेमा. p. 351, ब्रह्मलोकमानन्दकारणम्
5 A. S. B., and हेमा. p. 351 read तिलशैलदानम्
6 This section is not found in मत्स्यपुराण (Ānandāśrama edn.) and is ascribed to पद्मपुराण in हेमाद्रि, p.351

यत्प्रदानान्नरो याति विष्णुलोकमनुत्तमम् ॥
उत्तमो दशभिर्द्रोणैर्मध्यमः पञ्चभिर्मतः ।
त्रिभिः कनिष्ठो विप्रेन्द्र तिलशैलः प्रकीर्तितः ॥
पूर्ववच्चाऽपरं सर्वं [1]विष्कम्भं पर्वतादिकम् ।
दानमन्त्रं प्रवक्ष्यामि यथावन्मुनिपुङ्गव ॥
'यस्मान्मधुवधे विष्णोर्देहस्वेदसमुद्भवाः ।
तिलाः कुशाश्च माषाश्च तस्माच्छन्नो भवत्विह ॥
हव्यकव्येषु यस्माच्च तिलैरेवाऽभिलक्षणम् ।
भवादुद्धर शैलेन्द्र तिलाचल नमोऽस्तु ते' ॥
इत्यामन्त्र्य च यो दद्यात्तिलाचलमनुत्तमम् ।
स वैष्णवं पदं याति पुनरावृत्तिदुर्लभम् ॥
दीर्घायुषमवाप्नोति पुत्रं पौत्रं च मानवः ।
पितृभिर्देवगन्धर्वैः पूज्यमानो दिवं व्रजेत् ॥

इति तिलाचलदानम् ॥

## अथ [2]कार्पासाचलदानम् (६)

तत्र [3]मत्स्यपुराणे

अथाऽतः सम्प्रवक्ष्यामि कार्पासाचलमुत्तमम् ।

1 हेमा. p. 351, वृक्षविष्कम्भकादिकम्
2 हेमा. pp. 360–1, has कार्पासपर्वतदानविधिः
3 हेमा. pp. 360, ascribes this to पद्मपुराण. It is not found in म. पु.

यत्प्रदानान्नरः[1] श्रीमान् प्राप्नोति परमं पदम् ॥
कार्पासपर्वतस्तद्वद्विंशद्भारैरिहोत्तमः ।
दशभिर्मध्यमः प्रोक्तः कनिष्ठः पञ्चभिः स्मृतः ॥
भारेणाऽल्पधनो दद्याद्वित्तशाठ्यविवर्जितः ।
धान्यपर्वतवत् सर्वमासाद्य मुनिपुङ्गव[2] ॥
प्रभातायां तु शर्वर्यां [3]दद्यादिदमुदीरयन् ।
'त्वमेवाऽऽवरणं यस्माल्लोकानामिह सर्वदा ॥
कार्पासेन्द्र[4] नमस्तुभ्यमघौघध्वंसनो भव' ।
इति कार्पासशैलेन्द्रं यो दद्याच्छिवसन्निधौ[5] ॥
रुद्रलोके वसेत्कल्पं ततो राजा भवेदिह ॥

इति कार्पासशैलदानम् ॥

## अथ घृताचलदानम् (७)

तत्र मत्स्यपुराणे[6]

अथाऽतः सम्प्रवक्ष्यामि घृताचलमनुत्तमम् ।
तेजोऽमृतमयं सर्वं महापातकनाशनम् ॥

1 A. S. B., प्रसादात्
2 हेमा. pp. 361, राजसत्तम for मुनिपुङ्गव
3 I. O., इमं मन्त्रमुदीरयन्
4 हेमा. p. 361, कार्पासाचल
5 I. O., शिवसन्निधौ; Udaipur Ms. has पर्वसन्निधौ
6 In हेमा. p. 363, attributed to पद्मपुराण

विंशत्या घृतकुम्भानामुत्तमः स्याद्घृताचलः ।
दशभिर्मध्यमः प्रोक्तः पञ्चभिस्त्वधमः स्मृतः ॥
अल्पवित्तोऽपि[1] यो दद्याद्द्वाभ्यामिह विधानतः ।
विष्कम्भपर्वतांस्तद्वच्चतुर्थांशेन कल्पयेत् ॥
शालितण्डुलपात्राणि कुम्भोपरि निवेशयेत् ।
कारयेत्संहतान् सर्वान् यथाशोभं विधानतः ॥
वेष्टयेत् शुक्लवासोभिरिक्षुदण्डफलादिकैः ।
धान्यपर्वतवच्छेषं विधानमिह पठ्यते ॥
अधिवासनपूर्वं[2] तु तद्वद्धोमसुरार्चनम् ।
[ शालितण्डुलपात्राणि कुम्भोपरि निवेशयेत्[3] ] ॥
प्रभातायां तु शर्वर्यां गुरवे विनिवेदयेत् ।
विष्कम्भपर्वतांस्तद्वदृत्विग्भ्यः[4] शान्तमानसः ॥
संयोगाद्घृतमुत्पन्नं यस्मादमृततेजसः ।
तस्मात् घृतार्चिर्विश्वात्मा प्रीयतामत्र शङ्करः ॥
'यस्मात्तेजोमयं ब्रह्म घृते तच्च व्यवस्थितम् ।
घृतपर्वतरूपेण तस्मान्नः पाहि भूधर' ॥
अनेन विधिना दद्याद् घृताचलमनुत्तमम् ।
महापातकयुक्तोऽपि लोकमायाति[5] शाङ्करम् ॥

1 हेमा. p. 363, अल्पवित्तः प्रकुर्वीत
2 हेमा. p. 363, अधिवासं च कुर्वीत
3 हेमा. p. 363 has this line, which is missing in the manuscripts.
4 I. O., विप्रेभ्यः
5 I. O., आप्नोति

हंससारसयुक्तेन किङ्किणीजालमालिना ।
विमानेनाऽप्सरोभिश्च[1] सिद्धविद्याधरैर्वृतः ॥
विचरेत् पितृभिः सार्द्धं यावदाभूतसम्प्लवम् ॥

इति घृताचलदानम् ॥

## अथ [2]रत्नाचलदानम् (८)

तत्र [3]मत्स्यपुराणे

अथाऽतः सम्प्रवक्ष्यामि रत्नाचलमनुत्तमम् ।
मुक्ताफलसहस्रेण पर्वतः स्यात्स उत्तमः ॥
मध्यमः पञ्चशतिकस्त्रिशतेनाऽधमः[4] स्मृतः ।
चतुर्थांशेन विष्कम्भपर्वताः स्युः समन्ततः ॥
पूर्वेण वज्रगोमेदैर्दक्षिणे इन्द्रनीलकैः ।
पुष्परागयुतैः कार्यो विद्वद्भ्यो गन्धमादनः ॥
वैदूर्यविद्रुमैः पश्चात् सम्मितो विपुलाचलः[5] ।
पद्मरागैः ससौपर्णैरुत्तरेण च विन्यसेत् ॥

'वज्रगोमेदैः' समसंख्यैः, 'समं स्यादश्रुतत्वात्' इति

1 I. O., विमानेनाऽर्कवर्णेन

2 A. S. B. I. O., and हेमा. p. 364 have रत्नाचलदानम् The extract is attributed by हेमा. to पद्मपुराण

3 म. पु. ch. 90.

4 I. O., शतकैः विंशतैश्चाऽधमः

5 A. S. B. and I. O.

न्यायात्। 'सौपर्णः' गरुडात्मजः[1]।

धान्यपर्वतवत् सर्वमत्राऽपि परिकल्पयेत्।
तद्वदावाहनं कृत्वा वृक्षान् देवांश्च काञ्चनान्॥
पूजयेत्पुष्पपानीयैः प्रभाते च विसर्जयेत्।
पूर्ववद्गुरुऋत्विग्भ्य इमान् मन्त्रानुदीरयेत्॥
'त्वं च रत्नमयो नित्यं नमस्तेऽस्तु सदाचल[2]।
यथा देवगणाः सर्वे सर्वरत्नेष्ववस्थिताः॥
यस्माद्रत्नप्रसादेन तुष्टिं प्रकुरुते हरिः[3]।
स याति वैष्णवं लोकममरेश्वरपूजितः॥
सदा रत्नप्रसादेन तस्मान्नः पाहि पर्वत।
यावत्कल्पशतं साग्रं वसेदिह नराधिप'॥
अनेन विधिना यस्तु दद्याद्रत्नमहागिरिम्[4]।
रूपारोग्यगुणोपेतः सप्तद्वीपाधिपो भवेत्॥
ब्रह्महत्यादिकं किञ्चिद्यदत्राऽमुत्र वा कृतम्।
तत्सर्वं नाशमायाति गिरिर्वज्रहतो यथा॥

इति रत्नाचलदानम्॥

1 Reproduced by हेमा. pp. 364 ff.

2 I. O. and A. S. B. texts corrupt : restored from printed Purāṇas and हेमा. pp. 365

3 The order of the verses here is slightly different from म. पु. ch. 90, p. 161

4 I. O. and हेमा. pp. 365., रत्नमयं गिरिम्

## अथ [1]रूप्याचलदानम् (९)

तत्र [2]मत्स्यपुराणे

अतः परं प्रवक्ष्यामि रूप्याचलमनुत्तमम् ।
यत्प्रसादान्नरो याति सोमलोकं द्विजोत्तम ॥
दशभिः पलसाहस्रैरुत्तमो रजताचलः ।
पञ्चभिर्मध्यमः प्रोक्तस्तदर्द्धेनाऽवरः स्मृतः ॥
अशक्तौ विंशतेरूर्द्ध्वं कारयेच्छक्तितः सदा ।
विष्कम्भपर्वतांस्तद्वत्तुरीयांशेन कल्पयेत् ॥
पूर्ववद्राजतान् कुर्यान्मन्दरादीन् विधानतः ।
कलधौतमयांस्तद्वल्लोकेशानर्चयेद्बुधः ॥

'कलधौतं' काञ्चनम्[3] ।

ब्रह्मविष्णवर्कवान् कार्यो नितम्बोऽत्र हिरण्मयः ।
राजतं स्याद्यदन्येषां कार्यं तदिह काञ्चनम् ॥
शेषं च पूर्ववत् कुर्याद्धोमजागरणादिकम् ।
दद्यात्तद्वत्प्रभाते तु गुरवे रौप्यपर्वतम् ॥
विष्कम्भशैलानृत्विग्भ्यः पूज्य वस्त्रविलेपनैः ।
इमं मन्त्रं पठन् दद्याद्दर्भपाणिर्विमत्सरः ॥
'पितॄणां वल्लभो यस्माद्धरीन्द्राणां शिवस्य च[4] ।

1 A. S. B., रजताचलदानम्
2 म. पु. ch. 91. Attributed by हेमा. to पद्मपुराण
3 Reproduced by हेमा. pp. 365
4 A. S. B.

पाहि[1] राजत तस्मान्नः शोकसंसारसागरात्॥
इत्थं निवेश्य यो दद्याद्रजताचलमुत्तमम्।
गवामयुतदानस्य फलमाप्नोति मानवः॥
सोमलोके स गन्धर्वः किन्नराप्सरसां गणैः।
पूज्यमानो वसेद्धीमान् यावदाभूतसम्प्लवम्॥

इति रूप्याचलदानम्॥

## अथ शर्कराचलदानम् (१०)

तत्र मत्स्यपुराणे[2]

अथाऽतः सम्प्रवक्ष्यामि शर्कराचलमुत्तमम्।
यस्य प्रदानाद्विष्णवर्करुद्रास्तुष्यन्ति सर्वदा॥
अष्टभिः शर्कराभारैरुत्तमः स्यान्महाचलः।
चतुर्भिर्मध्यमः प्रोक्तो भाराभ्यामवरः स्मृतः॥
भारेण चाऽर्द्धभारेण कुर्याद्यः स्वल्पवित्तवान्।
विष्कम्भपर्वतान् कुर्यात्तुरीयांशेन मानवः॥
धान्यपर्वतवत्सर्वमासाद्याऽमरसंयुतम्।
मेरोरुपरि तद्वच्च स्थाप्यं हेमतरुत्रयम्॥
मन्दारः पारिजातश्च तृतीयः कल्पपादपः।
एतद्वृक्षत्रयं मूर्ध्नि सर्वेष्वपि निवेदयेत्॥

1 The printed text रजतं पाहि makes no sense : it should be पाहि राजत

2 म. पु. ch. 12, p. 162 ; attributed by हेमा. to पद्मपुराण

हरिचन्दनसन्तानौ पूर्वपश्चिमभागयोः ।
निवेश्यौ सर्वशैलेषु विशेषाच्छर्कराचले ॥
मन्दारे कामदेवश्च प्रत्यग्वक्त्रः सदा भवेत् ।
गन्धमादनश्रृङ्गे तु धनदः स्यादुदङ्मुखः ॥
प्राङ्मुखो वेदमूर्तिश्च हंसः स्याद्विपुलाचले ।
हैमी सुपार्श्वे सुरभी दक्षिणाभिमुखी भवेत् ॥
धान्यपर्वतवत् सर्वमावाहनमखादिकम् ।
कृत्वाऽथ गुरवे दद्यान्मध्यमं पर्वतोत्तमम् ॥
ऋत्विग्भ्यश्चतुरः शैलानिमान्मन्त्रानुदीरयेत् ।
'सौभाग्यामृतसारोऽयं परमः शर्करायुतः ॥
तद्वन्ममाऽऽनन्दकारी भव शैलेन्द्र सर्वदा ।
अमृतं पिबतां ये तु निपेतुर्भुवि शीकराः[1] ॥
देवानां तत्समुत्थोऽयं[2] पाहि नः शर्कराचल ।
मनोभवधनुर्मध्यादुद्गता शर्करा यतः ॥
तन्मयोऽसि महाशैल पाहि संसारसागरात्' ।
यो दद्याच्छर्कराशैलमनेन विधिना नरः ॥
सर्वपापविनिर्मुक्तः प्रयाति शिवमन्दिरम् ।
चन्द्रादित्यप्रतीकाशमधिरुह्याऽनुजीविभिः ॥
सहैव यानमातिष्ठेत्स तु विष्णुप्रचोदितः ।
ततः कल्पशतान्ते तु सप्तद्वीपाधिपो भवेत् ॥

1 Udaipur Ms., शर्कराः
2 म. पु. p. 162, देवानां तत्समुत्थस्त्वं

आयुरारोग्यसम्पन्नो यावज्जन्मायुतत्रयम् ।
भोजनं शक्तितः कुर्यात्सर्वशैले विमत्सरः[1] ॥
सर्वत्राऽक्षारलवणमश्नीयात्तदनुज्ञया ।
पर्वतोपस्करान् सर्वान् प्रापयेद्ब्राह्मणालयम् ॥

तथा

पश्येदिमानप्यधनोऽपि भक्त्या
स्पृशेन्मनुष्यैरिह दीयमानान् ।
शृणोति भक्त्याऽथ मतिं ददाति
निष्कल्मषः सोऽपि दिवं प्रयाति ॥
दुःस्वप्नप्रशममुपैति पठ्यमानैः
शैलेन्द्रैर्भवभयभेदनैर्मनुष्यः ।
यः कुर्यात् किमु मुनिपुङ्गवेह सम्यक्
शान्तात्मा सकलगिरीन्द्रसम्प्रदानम् ॥

इति शर्कराचलदानम् ॥

इति [2]महाराजाधिराजश्रीमद्गोविन्दचन्द्रदेवमहासान्धिविग्रहिक भट्टश्रीहृदयधरात्मज भट्टश्रीलक्ष्मीधरविरचिते कृत्यकल्पतरौ दानकाण्डे पर्वतदानानि ॥

1 A. S. B., सर्वशैलेष्वमत्सरः
2 A. S. B.; Udaipur Ms. has इति श्रीमल्लक्ष्मीधरविरचिते कृत्यकल्पतरौ दानकाण्डे पर्वतदानानि; I. O. reads पर्वतदानपर्व for पर्वतदानानि

## ६

# अथ गुडधेन्वादिदानानि

तत्र [1]मत्स्यपुराणे

गुडधेनुविधानस्य यद्रूपमिह यत्फलम् ।
तदिदानीं प्रवक्ष्यामि सर्वपापप्रणाशनम् ॥
कृष्णाजिनं चतुर्हस्तं प्रागग्रं विन्यसेद्भुवि ।
गोमयेनोपलिप्तायां दर्भानास्तीर्य यत्नतः ॥
लघ्वेणकाजिनं तद्वद्वत्सस्य परिकल्पयेत् ।
प्राङ्मुखीं कल्पयेद्धेनुमुदक्पादां सवत्सकाम् ॥
उत्तमा गुडधेनुः स्यात्सदा भारचतुष्टयम् ।
वत्सं भारेण कुर्वीत भाराभ्यां मध्यमा स्मृता ॥
अर्द्धभारेण वत्सः स्यात्कनिष्ठा भारकेण यः ।
चतुर्थांशेन वत्सः स्यात् गृहवित्तानुसारतः ॥
धेनुवत्सौ घृतास्यौ तौ सितसूक्ष्माम्बरावृतौ[2] ।
शुक्तिकर्णाविक्षुपादौ शुचिमुक्ताफलेक्षणौ ॥

1 हेमा. p. 382, brings गुडधेन्वादिदानानि under अतिदान, as defined in भविष्यपुराण:
'त्रीण्याहुरतिदानानि धेनुः पृथ्वी स्वरस्वती'. (p. 381)

2 A. S. B., श्लक्ष्णाम्बरावृतौ

सितसूत्रशिरालौ तौ सितकम्बलकम्बलौ ।
ताम्रकद्रूकपृष्ठौ[1] तौ सितचामररोमकौ ॥
विद्रुमभ्रूयुगोपेतौ नवनीतस्तनान्वितौ ।
क्षौमपुच्छौ कांस्यदोहाविन्द्रनीलकतारकौ ॥
सुवर्णशृङ्गाभरणौ राजतखुरसंयुतौ ।
नानाफलसमायुक्तौ घ्राणगन्धकरण्डकौ ॥

'गन्धकरण्डः' सुरभिगन्धाढ्यद्रव्यं कर्पूरादि ।

इत्येवं रचयित्वा तु धूपदीपैरथार्चयेत् ।
[ॐ] 'या लक्ष्मीस्सर्वभूतानां या च देवेषु संस्थिता ॥
धेनुरूपेण सा देवी मम शान्तिं प्रयच्छतु ।
देहस्था या च रुद्राणी शङ्करस्य सदा प्रिया ॥
धेनुरूपेण सा देवी मम पापं व्यपोहतु ।
विष्णोर्वक्षसि या लक्ष्मीः स्वाहा या च विभावसोः ॥
चन्द्रार्कशक्रशक्तिर्या धेनुरूपाऽस्तु सा श्रिये ।
चतुर्मुखस्य या लक्ष्मीः या लक्ष्मीर्धनदस्य च ॥
लक्ष्मीर्या लोकपालानां सा धेनुर्वरदाऽस्तु मे ।
स्वधा या पितृमुख्यानां स्वाहा यज्ञभुजां च या ॥
सर्वपापहरा धेनुः तस्माच्छान्तिं प्रयच्छ मे' ।
एवमामन्त्र्य तां धेनुं ब्राह्मणाय निवेदयेत् ॥
विधानमेतद्धेनूनां सर्वासामिह पठ्यते ॥

1 हेमा p. 382, कद्रूकं ककुत्प्रदेशः

तथा[1]

यास्तु पापविनाशिन्यः पठ्यन्ते दश धेनवः ।
तासां स्वरूपं वक्ष्यामि नामानि च नराधिप ॥
प्रथमा गुडधेनुस्स्यात् घृतधेनुस्तथा परा ।
तिलधेनुस्तृतीया च चतुर्थी जलसंज्ञिता ॥
क्षीरधेनुश्च विख्याता मधुधेनुस्तथा परा ।
सप्तमी शर्कराधेनुर्दधिधेनुस्तथाऽष्टमी ॥
रसधेनुश्च नवमी दशमी स्यात्स्वरूपतः ।
कुम्भास्स्युर्द्रवधेनूनामितरासां च राशयः ॥
सुवर्णधेनुमप्यत्र केचिदिच्छन्ति मानवाः ।
नवमी तेन तैलेन[2] तथाऽन्येऽपि महर्षयः ॥
एतदेव विधानं स्यात्तत्रैवोपस्कराः स्मृताः ।
मन्त्रावाहनसंयुक्ताः सदा पर्वणि पर्वणि ॥
यथाश्रद्धा प्रदातव्या भुक्तिमुक्तिफलप्रदा ।
अमेययज्ञफलदाः[3] सर्वपापहराः शुभाः ॥
अयने विषुवे पुण्ये व्यतीपातेऽथवा पुनः ।
गुडधेन्वादयो देया उपरागादिपर्वसु ॥

❀अत्र च घृतादिधेनुद्रव्यपरिमाणमपि गुडधेनूक्तमेव,

'विधानमेतद्धेनूनां सर्वासामपि पठ्यते'

इति सामान्येनाऽतिदेशात् ।

1 हेमा. p. 381

2 I. O., कल्पेन

3 A. S. B., अमेय ( immeasurable )

'कुम्भास्स्युर्द्रवधेनूनामितरासां तु राशयः'

इति भारचतुष्टयादिपरिमितद्रवद्रव्यस्याऽवस्थापनप्रकारकथनम्। यत्र पद्मपुराणादौ एकेनैव घटेन घृतादिधेनुकथनं, द्रोणमात्रेण च तिलधेनुकथनं, तदेतद्धेनुप्रकारात् प्रकारान्तराभिप्रायेण[1]❀।

महाभारते[2]

गोमत्या विद्यया धेनुं तिलानामभिमन्त्र्य यः।
रसरत्नमयीं दद्यान्न संशोचेत्कृताकृते॥

गोमती विद्या तत्रैव

'गावो मामनुतिष्ठन्तु हेमशृङ्गाः पयोमुचः।
सुरभ्यस्सौरभेय्यश्च सरितः सागरं यथा॥
गावः पश्याम्यहं नित्यं गावः पश्यन्तु मां सदा।
गावोऽस्माकं वयं तासां यतो गावस्ततो वयम्॥
एवं रात्रौ दिवा चाऽपि समेषु विषमेषु च।
महाभयेषु च नरः कीर्तयन्मुच्यते भयात्॥

1 हेमाद्रि p. 384, cites the entire prose explanation between the stars * and adds 'इति कल्पतरुः' This has enabled the erroneous version of the passage in the manuscripts to be corrected.

2 हेमा. p. 388 ख.

इत्येषा गोमती विद्या कीर्तिता ते मयाऽनघ' ॥

इति गोवधप्रायश्चित्ते वक्ष्यते ।

पद्मपुराणे[1]

विधानं तिलधेनोर्यत्तच्छृणुष्व नराधिप ।
षोडशाढमयी धेनुश्चतुर्भिर्वत्सको भवेत् ॥
इक्षुदण्डमयाः पादाः दन्ताः पुष्पमयाः शुभाः ।
नासा गन्धमयी तस्या जिह्वा गुडमयी तथा ॥
पृष्ठे तु कल्पनीया स्याद्घण्टाभरणभूषिता ।
ईदृशीं कल्पयित्वा तु स्वर्णशृङ्गीं प्रकल्पयेत् ॥
रौप्यखुरां कांस्यदोहां पूर्वधेनुविधानतः ।
एवं विधानं कृत्वा तु ब्राह्मणाय तु दापयेत् ॥
कृष्णाजिनस्थितां धेनुं वासोभिर्भूषितां शुभाम् ।
सूत्रेण सूचितां कृत्वा पञ्चरत्नसमन्विताम्[2] ॥
सर्वौषधिसमायुक्तां मन्त्रमुक्त्वा तु दापयेत् ।
'अन्नं मे जायतां सद्यः पानं सर्वरसास्तथा ॥
कामान् सम्पादयाऽस्माकं तिलधेनो द्विजार्पिते ।
गृह्णामि देवि त्वां भक्त्या कुटुम्बार्थं विशेषतः ॥
भरस्व कामैर्मां सर्वैस्तिलधेनो नमोऽस्तु ते' ।
एवं विधानतो दत्ता तिलधेनुर्नृपोत्तम ॥
सर्वकामसमावाप्तिं कुरुते नाऽत्र संशयः ।

1 हेमा. p. 388 ग

2 A. S. B., पञ्चरत्नमयीं तथा

जलधेनुस्तथैवेह कुम्भधेनुः प्रकल्पिता ॥
दत्ता तु विधिना कामान् सद्यः सर्वान् प्रयच्छति ।
धेनुश्च तत्र दत्ता हि पौर्णमास्यां नराधिप ॥
सा पितॄंस्तारयेद्दुर्गान्नरकात् कामदा भवेत् ।
घृतधेनुस्तथा दत्ता विधानेन विचक्षणैः ॥
सर्वकामसमावाप्तिं कुरुते कान्तिदा भवेत् ।
रसधेनुं तथा दत्वा कार्तिके मासि पार्थिव ॥
सर्वान् कामानवाप्नोति नित्यं सुगतिभाग्भवेत् ॥

इति पञ्च[गुड]धेनुदानम् ॥

वराहपुराणे[1]

चतुर्भिस्सेतिकाभिस्तु प्रस्थ एकः प्रकीर्तितः ।
सा तु षोडशभिः कार्या चतुर्भिर्वत्सको भवेत् ॥
इक्षुदण्डमयाः पादाः [2]दन्ताः पुष्पमयाः शुभाः ।
नासा गन्धमयी तस्या जिह्वा गुडमयी तथा ॥
पुच्छे स्रक्कल्पनीया स्यात् घण्टाभरणभूषिता ।
ईदृशीं कल्पयित्वा तु स्वर्णशृङ्गीं प्रकल्पयेत् ॥
कांस्यदोहां रौप्यखुरां पूर्वधेनुविधानतः ।
तिलधेनुं तदा दत्वा द्वादश्यां नियतः शुचिः[3] ॥
आत्मानं तारयेद्दुर्गान्नरकात् कामदा भवेत् ।

1 वराहपुराण p. 433, Bibliotheca Indica ed.
2 वरा. पु. p. 437, रजतस्य खुरैर्युताः
3 इदं पद्यं मुद्रितवराहपुराणे नोपलभ्यते

'सेतिका' कुडवः । स च द्वादशप्रसृतिपरिमितः ।

देवीपुराणे

तिलधेनुं प्रवक्ष्यामि दुर्गा येन प्रसीदति ।
अपि दुष्कृतकर्माऽपि यां दत्वा प्रयतो भवेत् ॥
प्रत्यक्षा येन देवी स्याद्राजपुत्र सुखावह ।
भवनेऽतिचिरेणैतत् तच्छृणुष्व नरोत्तम ॥
देवदेवीमनुज्ञाप्य स्नातो वै संयतेन्द्रियः ।
पूजयेत् पुष्पगन्धाद्यैः दीपधूपैर्विचक्षणः ॥
हुत्वा हुताशने देवीं तथा द्रोणमयीं कुरु ।

'हुत्वा हुताशने देवीमि'ति । देवीं पूजयित्वा होमप्रकारेण देवीं प्रीणयित्वा ।

आढकेन भवेद्वत्सः सर्वरत्नविभूषितः ।
हैमशृङ्गीं रौप्यखुरां गन्धघ्राणां सुशोभिताम् ॥
मुखं गुडमयं कार्यं जिह्वामन्नमयीं तथा ।
कङ्कणं सूक्ष्मसूत्रं तु पादाविक्षुमयौ तथा ॥
ताम्रपृष्ठं भवेत्तस्या ईक्षणे मणिमौक्तिके ।
चारुसूत्रमयौ[1] कर्णौ दन्तौ फलमयौ तथा ॥
नवनीतैः स्तनान् कुर्यात् पुच्छं माल्यमयं कुरु ।
पुच्छं तु मणिमुक्ताभिः फलैस्ताश्च समर्चयेत् ॥
शुभवस्त्रयुगच्छन्नां चारुवस्त्रविभूषणाम् ।
ईदृक्संस्थानसम्पन्नां कृत्वा श्रद्धासमन्वितः ॥

1 A. S. B., चारुपत्रमयौ

कांस्योपदोहनां दद्याद्देवी मे प्रीयतामिति ।
मन्त्राभिमन्त्रितां कृत्वा तद्भक्ताय निवेदयेत् ॥
यावांश्च तिलवस्त्राणां धातुमूलफलस्य च ।
विद्यते तु रजो यावत्तावत् स्वर्गे वसेन्नरः ॥
पितॄन् विगतपापांस्तु कृत्वाऽधस्ताद्भृतानपि[1] ।
प्राप्य देव्याः शुभान् लोकान् स्थापयेदविचारतः[2] ॥
तस्मिन् स रमते वत्स यावदा चन्द्रतारकम् ।
तथा कालादिहाऽऽयातो जायते पृथिवीपतिः ॥
प्राप्यं योगसहस्रैर्यत् प्राप्नोति परमं पदम् ॥

इति तिलधेनुदानम् ॥

## अथ घृतधेनुदानम्

देवीपुराणे

तिलाभावे प्रदातव्या सर्पिर्धेनुर्विधानतः[3] ।
स्नापयित्वा भवानीं तु घृतक्षीरैर्यथाविधि ॥
पूजयेत् स्रजमालाभिर्नैवेद्यैः सुमनोहरैः ।
आहरेत् सर्वद्रव्याणि उपकल्पेत तत्र ताम् ॥
गव्यस्य सर्पिषः कुम्भैः पुष्पमालाविभूषितम् ।
कांस्यपात्रं तथा वस्त्रैश्छादितं च विधीयताम् ॥

1 A. S. B., हृतानपि; Udaipur Ms. has भवानपि
2 A. S. B., अविचारणात्
3 हेमा. pp. 394 ff.

हिरण्यगर्भसहितां मणिविद्रुममौक्तिकैः ।
पादानिक्षुमयान् कृत्वा कुर्याद्रौप्यमयान् शफान् ॥
हेमचक्षुस्तथा शृङ्गैः कृष्णागुरुमयैः शुभैः ।
सप्तधान्यैश्च तत्पार्श्वे पात्रान्तेन च केवलम्[1] ॥

'पार्श्वे' कुक्षिसन्निहितदेशभागे ।

घ्राणं त्वगरुकर्पूरैः तथा फलमयाः शुभाः ।
मुखं च गुडक्षीरेण सितां जिह्वां प्रकल्पयेत् ॥
पुच्छं क्षौममयं कार्यं रोमाणि सितसर्षपैः ।
ताम्रपृष्ठं विचित्रं तु ईदृग्रूपां मनोरमाम् ॥
विधिना घृतवत्सं च कुर्याल्लक्षणलक्षितम् ।
एतैः कृत्वा तथा नत्वा[2] पूजयित्वा विधानतः ॥
तद्भक्ताय प्रदातव्या सर्पिषो धेनुरुत्तमा[3] ।
'इमां ममोपकाराय गृह्णीष्व मदनुग्रहात् ॥
प्रीयतां नन्दिनी देवी मङ्गला चर्चिता तु सा[4]' ।
इत्युक्त्वा वाचयेद्धेनुं कृत्वा मन्त्रमनोनुगाम् ॥
अनेन विधिना देया सर्पिषो धेनुरुत्तमा ।
हिरण्यरत्नधेनुश्च प्रदेया विधिना शुभा[5] ॥
मुच्यते सर्वपापेभ्यः सर्वान् कामानवाप्नुयात् ।

1 हेमा. p. 395, पात्रोर्णेन च कम्बलम्
2 A. S. B., नन्दां
3 A. S. B. ; Udaipur Ms. has मङ्गला शास्त्रपारगे
4 A. S. B., चर्चिका उमा
5 A. S. B., विधिनाऽमुना; हेमा. p. 395

यत्र क्षीरवहा नद्यो यत्र सर्पिःफलद्रुमाः[1] ॥
पयसा कर्दमा यत्र तस्मिन् लोके महीयते ।
तेषां [2]चाऽभीष्टमाप्नोति मुदा परमया पुनः ॥
दशपूर्वापरांस्तार्य आत्मानं चैकविंशतिम् ।
भूयः पृथ्वीशतां याति इह लोके स मानवः ॥
सकामानामियं [3]पुष्टिर्येनोक्ता बहुधा कृता[4] ।
देव्या लोकमवाप्नोति निष्कामो घृतधेनुदः ॥

इति [ देवीपुराणोक्त ] घृतधेनुदानम् ॥

## अथ जलधेनुदानम्

तोयधेनुं शृणु वत्स यथा देवी प्रसीदति[5] ।
कुम्भं तोयेन सम्पूर्णं रत्नवस्त्रयुगान्वितम् ॥
समस्तबीजसंयुक्तं दूर्वापल्लवशोभितम् ।
दूर्वाक्षतदधिक्षीरकुष्ठामलकचन्दनैः ॥

'समस्तबीजानि' सर्वधान्यानि[6] ।

माल्यद्रव्यसमायुक्तं[7] तिलपात्रैश्च संयुतम् ।

1 हेमा. p. 395., सर्पिर्वहा ह्रदाः
2 A. S. B. and हेमा. p. 396., स्वामित्वं
3 A. S. B., and हेमा. p. 396, व्युष्टिः for पुष्टि
4 A. S. B., and हेमा. p. 366, धेनोस्तावदुदाहृता
5 हेमा. p. 401; cited from देवीपुराण
6 Repeated हेमाद्रि. pp. 401
7 A. S. B. and हेमा. p. 401., माल्यच्छत्र

दधिक्षीरघृतं पात्रं धान्यानां च प्रकल्पयेत् ॥
वत्सकं कल्पयेत्तत्र तद्वत्तोयमयं बुधः ।
देवीमभ्यर्च्य विधिवत् सोपवासो ह्यनन्तरम्[1] ॥
देवीभक्ताय दद्याद्यः सर्वान् कामानवाप्नुयात् ।
'जयाऽरितूदनी देवी देवानां भयनाशिनी ॥
वेदमातर्वरे दुर्गे सर्वगे सुभगे नमः' ।
अनेन वत्समन्त्रेण नन्दानाम्नाऽभिमन्त्रयेत् ।
देवी मे प्रीयतां नित्यं यथोदितफलं शुभा ॥

इति तोयधेनुप्रदानम् ॥

स्कन्दपुराणे[2]

जलधेनुं च यो दद्यात्तस्य दानफलं शृणु ।
प्रपाशालां नगं कूपं वापीकासारपुष्कलम्[3] ॥
कृत्वा चैतत्समन्त्रेण मन्दानाम्नाऽभिमन्त्रयेत्[4] ।
देवी मे प्रीयतां नित्यं यथोदितफलानि च ॥
पुष्पैश्च विविधाकारैरभ्यर्च्य द्विजसत्तमान् ।
भक्ष्यभोज्यैः सतृप्तानां तिलपात्राणि दापयेत् ॥
दक्षिणां पुष्कलां दद्यादेभ्यस्त्वाशंसयेत्ततः[5] ।

1 *Ibid*, अथ नक्तवान्
2 Omission : supplied by A. S. B. and हेमा. p. 401
3 A. S. B., प्रपां सभां तडागं च कूपं चापि स्वपुष्कलम्
4 Different in हेमा. p. 401
5 A. S. B.

'एभ्यो' द्विजेभ्यः[1] ।

आपः शिवाश्च सौम्याश्च तर्पयन्तु पितॄन् मम ।
कामदा मम कामाय भवन्त्विति वै वदेत्[2] ॥
एवं दत्वा तु तां धेनुं पुनः [3]कृत्वा च वै तदा ।
वाहयेत्तु प्रपादेवीं ब्रह्मलोकसमर्पिणीम्[4] ॥
तिलपात्राणि दत्वा च तथा वस्त्रयुगं शुभम् ।
सुवर्णस्य च सान्निध्यं फलानि विविधानि च ॥
ततो दद्याच्छुचिः शान्तो ब्राह्मणेभ्यो यथाविधि ।
घृतं गावः प्रसूयन्ते घृतं भूम्यां प्रतिष्ठितम् ॥
घृतमग्निश्च देवाश्च घृतं मे सम्प्रदीयताम् ।
एवं विधानतो दद्याद्ब्रह्मलोके महीयते ॥

इति जलधेनुदानम् ॥

## अथ तिलधेनुदानम्

आदित्यपुराणे[5]

दरिद्रः खलु यो दद्यात्तिलधेनुं विधानतः ।
गोमयेनोपलिप्याऽथ तत्र धेनुं समालिखेत् ॥

1 हेमा. p. 402
2 A. S. B., and हेमा. p. 402
3 A. S. B., क्रीत्वा च तां तदा
4 A. S. B., and हेमा.
5 हेमा. p. 388 ख

तिलैरापूर्य सर्वाङ्गं तिलधेनुं प्रकल्प्य च ।
खुरेषु चैव शृङ्गेषु देयं कनकमेव च ॥
सतिलां[1] दक्षिणां चैव ब्राह्मणाय निवेदयेत् ।
तिलधेनुं प्रयच्छंस्तु स्वर्गलोकं च गच्छति ।
ऋणैः सर्वैः प्रमुच्येत कर्मणा मनसा कृतैः ॥
तिलसंख्या च यावद्वै [2]तिलकोटिशतानि च ।
मोदते तत्र वर्षाणां वसुलोके न संशयः ॥
अथ मानुषमायाति कदाचित्कालपर्य्ययात् ।
धनधान्यसमृद्धो वा जायते महतां कुले ॥

महाभारते[3]

सुदक्षिणां काञ्चनचारुशृङ्गीं
कांस्योपदोहां द्रविणोत्तरीयाम् ।
धेनुं तिलानां ददतो द्विजाय
लोका वसूनां सुलभा [4]भवन्ति ॥

तथा

धेन्वाः प्रमाणेन समप्रमाणं
धेनुं तिलानामपि च प्रदाय ।

1 हेमा. p. 388 ख, सचैलां
2 A. S. B., तावत्कोटिशतानि च; so also हेमा. p, 388
3 हेमा. p. 388 ख.
4 हेमा. p. 388 क and A. S. B.

पानीयवापीं च यमस्य लोके
न यातनां काश्चिदुपैति मर्त्यः[1] ॥

इति तिलधेनुदानम् ॥

आदित्यपुराणे[2]

गवाभावे तथा दद्यात् घृतधेनुं यतव्रतः ।
केन कार्य्यविधानेन तदिहैकमनाः शृणु ॥
आदित्यं तु जगन्नाथं घृतक्षीराभिषेचनैः ।
सम्पूज्य पूर्ववत् पुष्पैर्गन्धधूपादिभिर्नरः ॥
अहोरात्रोषितो भूत्वा [3]अभिपूज्य घृतार्च्चिषम् ।
गव्यस्य सर्पिषः कुम्भं पुष्पमालाविभूषितम् ॥
कांस्योपधानसंयुक्तं सितवस्त्रयुगेन च[4] ।
हिरण्यगर्भसहितं मणिविद्रुममौक्तिकैः ॥
इक्षुयष्टिमयाः पादाः खुरा रूप्यमयास्तथा ।
सौवर्णे चाक्षिणी कुर्याच्छृङ्गं चाऽगुरुकल्पितम् ॥
सप्तधान्यमये पार्श्वे पत्रोर्णेन च कम्बलम् ।

'पत्रोर्णं' कौशेयविशेषः ।

1 A. S. B. and हेमाद्रि; Udaipur Ms. and I. O. have many lacunae and errors.

2 हेमा. p. 396

3 A. S. B., अभिष्टूय घृतार्च्चिषिम्; हेमा. p. 396., अभिष्टुत्य

4 A. S. B. and हेमा. p. 396

कुर्यात्तुरुष्ककर्पूरं[1] प्राणान् फलमयांस्तथा ।
तत्वशर्करया जिह्वां गुडक्षीरमयं मुखम् ॥
क्षौमसूत्रेण लाङ्गूलं लोमानि सितसर्षपैः ।
ताम्रपात्रमयं कुर्यात् पृष्ठं स्रग्दामसंयुतम्[2] ॥
ईदृक्स्वरूपां सङ्कल्प्य घृतधेनुं नराधिपः ।
तद्वत्कल्पनया धेनोः घृतवत्सं प्रकल्पयेत् ॥

'ईदृक्स्वरूपां' सम्मुखं घृतधेनुवत् अवयवकल्पना-प्रकारेण[3] ।

तं च विप्रं महाभागं मनसैव घृतार्चिषम्[4] ।
कल्पयित्वा ततस्तस्मै प्रयतः प्रतिपादयेत् ॥
'इमां ममोपकाराय गृह्णीष्व त्वं द्विजोत्तम ।
प्रीयतां मम देवेशो घृतार्चिर्मिहिरोत्तमः'[5] ॥
इत्युदाहृत्य विप्राय दद्याद्धेनुं नरोत्तम ।
दत्वैकरात्रं स्थित्वा च घृताहारो नराधिप ॥
मुच्यते सर्वपापेभ्यः तस्य दानफलं शृणु ।
घृतक्षीरवहा नद्यो यत्र पायसकर्दमाः ॥
तेषु लोकेषु नित्यं स मोदते त्रिदशैः सह ।
पितुरूर्द्ध्वं नयेत् सप्त पुरुषांस्तस्य येऽप्यधः ॥

इति घृतधेनुदानम् ॥

1 Note the reference to तुरुष्ककर्पूर

2 A. S. B., ताम्रपात्रमयं पृष्ठं कुर्यात् श्रद्धासमन्वितः

3 A. S. B.

4 A. S. B. and हेमा.

5 Lacuna supplied by A. S. B. and हेमा. p. 397

उपोषितः समभ्यर्च्य आदित्यं परमेश्वरम्[1] ।
पुष्पधूपोपहारैश्च यथाविभवमादृतः ॥
सङ्कल्प्य जलधेनुं च कुम्भं तमभिपूजयेत् ।
पूजयेद्वत्सकं तद्वत् कृतं जलमयं बुधः ॥
एवं सम्पूज्य आदित्यं[2] जलधेनुं सवत्सकाम् ।
सितवस्त्रधरः शान्तो वीतरागो विमत्सरः ॥
दद्याद्विजाय देवाय प्रीत्यर्थं मिहिरस्य च ।
'आदित्यश्च जगद्योनिः प्रीयतां मिहिरस्तदा' ॥
इति चोच्चार्य तां गां तु विप्राय प्रतिपादयेत् ।
अपराधाद्वि हस्तो म अघं याति न संशयः ॥
अनेन विधिना दत्वा जलधेनुं महामुने ।
सर्वाह्लादमवाप्नोति ये दिव्या ये च मानुषाः[3] ।
शरीरारोग्यमाबाधाप्रशमः सर्वकामदः ।
नृणां भवति दत्तायां जलधेन्वां न संशयः ॥

तथा

सर्वपापविनिर्मुक्तः पितरः सपितामहाः ।
प्रपितामहं यथापूर्वपुरुषाणां चतुष्टयम् ॥
आत्मानं तनयं पौत्रं तदधस्ताच्चतुष्टयम् ।
तारयेत् स मुनीन्द्रेह जलधेनुप्रदो नरः ॥
यश्च गृह्णाति विधिवत् तस्याऽप्येवंविधाः कुले ।

1 हेमा. p. 399, वासुदेवं जलेश्वरम्
2 हेमा. p. 399., गोविन्दं
3 हेमा. p. 399; A. S. B., दिव्यांश्च ध्यायेत मानुषः

चतुर्दशविधाश्चैव ददतश्चाऽनुमोदतः ॥
दीयमानां प्रपश्यन्ति जलधेनुं च ये नराः ।
ते चाऽशेषाघनिर्मुक्ताः प्रयान्ति परमां गतिम् ॥

इति जलधेनुदानम् ॥

आदित्यपुराणे[1]

जलधेनुं प्रवक्ष्यामि प्रीयते दत्तया यया ।
देवदेवो मयूखेशः[2] सर्वगः सर्वभावनः ॥
जलकुम्भं मुनीन्द्रेह सुवर्णकजलान्वितम् ।
रत्नगर्भैरशेषैस्तु ग्राम्यैर्धान्यैः समन्वितम् ॥
सितवस्त्रयुगच्छन्नं दूर्वापल्लवशोभितम् ।
कुष्ठं मांसीमुशीरं च बालकामलकैर्युतम् ॥
प्रियङ्गुपात्रसहितं सितवस्त्रोपवीतिनम् ।
सच्छत्रं च सोपानत्कं यानं विष्णुरथे स्थितम् ॥
चतुर्दशावृतं[3] धूपैस्तिलपात्रैश्चतुर्दिशम् ।
स्थापितं दधिपात्रेण [4]मधुक्षौद्रवता मुखे ॥
सर्वक्लेशं परित्यज्य विष्णुमाश्रयते सदा ।
पूज्यमानश्च विबुधैः स गच्छेत्परमं पदम् ॥
यस्तु स्थापयते सर्वं मोक्षं स लभते नरः ॥

इति जलधेनुदानम् ॥

1 हेमा. p. 398
2 हेमा. p. 398 हृषीकेशः
3 हेमा. p. 398, चतुर्भिः संवृतं भूप
4 A. S. B. and हेमा. p. 399., घृतक्षौद्र

## अथ रूपतो गोदानम्

तत्र [1]याज्ञवल्क्यः

हैमशृङ्गैः शफै रौप्यैः सुशीला वस्त्रसंयुता ।
सकांस्यपात्रा दातव्या क्षीरिणी गौस्सदक्षिणा ॥
दाताऽस्याः स्वर्गमाप्नोति वत्सरान् रोमसंहितान् ।
कपिला चेत्तारयति भूयस्त्वासप्तमं कुलम् ॥
स वसेद्रोमसंख्यानि युगान्युभयतोमुखीम् ।
दाताऽस्याः स्वर्गमाप्नोति पूर्वेण विधिना ददत् ॥
यावद्वत्सस्य पादौ द्वौ मुखं योन्यां प्रदृश्यते ।
तावद्गुभौ पृथिवी ज्ञेया यावत् गर्भं न मुञ्चति ॥

संवर्त्तः

यो ददाति शफै रौप्यैर्हैमशृङ्गामरोगिणीम् ।
सवत्सां वस्त्रसंयुक्तां सुशीलां गां पयस्विनीम् ॥
यावन्ति तस्या रोमाणि सवत्साया दिवं गताः ।
तावतो वत्सरान् ते तु वसन्ति ब्रह्मणोऽन्तिके ॥
यो ददाति बलीवर्दमुक्तेन विधिना शुभम् ।
स्वव्यङ्गगोप्रदानात्तु भुङ्क्ते दशगुणं फलम् ॥
रुक्मशृङ्गीं रौप्यमुखीं शुक्लां लाङ्गूलभूषिताम् ।
कांस्योपदोहनां धेनुं वस्त्रच्छन्नामलङ्कृताम् ॥
दत्वा द्विजेन्द्राय नरः स्वर्गलोके महीयते ।
दशधेनुप्रदानेन तुल्यैककपिला मता ॥

1 cf. दानमयूख, Chowkhamba edn. pp. 184–6

अयं तद्रक्तपीताशः कपिला गौर्विभूषणम्[1] ।
दाता धुरन्धरं गत्वा दशधेनुप्रदो भवेत् ॥

बृहस्पतिः

हैमशृङ्गीं रौप्यखुरां कांस्यभाजनसंयुताम् ।
सवत्सां कापिलां दत्वा वंशान् सप्त समुद्धरेत् ॥

विष्णुः

गोप्रदानेन स्वर्गमाप्नोति यो दान्तं वृषभं ददाति स च[2] दशधेनुप्रदो गोलोकं शतप्रदश्च ब्रह्मणो लोकम् ।

'दान्तः' कृतदमनः ।

जाबालिः

होमार्थमग्निहोत्रस्य यो गां दद्यात् यथाविधि ।
त्रिवर्गपूर्णां[3] पृथिवीं चिरं भुङ्क्ते न संशयः ॥

वायुपुराणे[4]

नीलां वा यदि वा श्वेतां पाटलां कपिलामपि ।
सत्वग्रां[5] वत्सलां चैव सुखदोह्यां स्वगां नृप ।
आदाय विधिवद्देवीं पूजयेद्भक्तिभावतः ॥
[ धूपं च पञ्चनिर्यासं तुरुष्कागुरुचन्दनम् ।

'पञ्चनिर्यासं' गुग्गुलु सर्जे सरल देवदारुनिर्याससंज्ञकाः ।

1 A. S. B. omits this verse.

2 A. S. B.

3 A. S. B., त्रिवित्तपूर्णां

4 A. S. B., देवीपुराणे for वायुपुराणे

5 A. S. B., सदुग्धाम् and सुखदोह्यां

दत्वा च मन्त्रपूर्वन्तु नैवेद्यमुपकल्पयेत्[1] । ]
पायसं घृतसंयुक्तं क्षालयेच्च तथा तु ताम्[2] ।
द्विजाय शिवभक्ताय सवत्सां गां निवेदयेत् ॥
हेमवस्त्रां सकांस्यां च महापुण्यमवाप्नुयात् ।
यावत्तद्रोमसंख्यानं तावद्देव्याः पुरे वसेत् ॥
इहैव गतपापोऽसौ जायते नृपसत्तमः ।

नन्दिपुराणे

यो मांसपरिपूर्णां गां हैमशृङ्गीमकोपनाम् ।
सुशीलां राजतैः पादैश्छत्रवस्त्रसुसंवृताम् ॥
सलोहपात्रां कुतपविविक्तचरणां तथा ।

'कुतपो' नेपालकम्बलः[3] ।

सदक्षिणां प्रदद्याच्चाऽक्षयं स्वर्गमाप्नुयात् ।
गवि रोमाणि यावन्ति स्वप्रसूतिकुलेन वै ॥
तावदब्दसहस्राणि स्वर्गे दाता न संशयः ।
एतच्छतगुणं पुण्यं कपिलादानतः स्मृतम् ॥

'स्वप्रसूतिकुलस्थितौ' प्रसूतिसन्तानसहितायाम् ।

आदित्यपुराणे

कपिलां ये प्रयच्छन्ति चेलच्छन्नां स्वलङ्कृताम् ।

1 A. S. B.

2 A. S. B., कृतां

3 Note.

सुवर्णशृङ्गीं रौप्यखुरां मुक्तालाङ्गूलभूषिताम् ॥
श्वेतवस्त्रयुगच्छन्नां घण्टास्वनरवैर्युताम् ।

'घण्टास्वनरवैः' घण्टाशब्दकोलाहलैः ।

सहस्रं यो गवां दद्यात् कपिलां वाऽपि सुव्रताम् ।
सममेव पुरा प्राह ब्रह्मा ब्रह्मविदां वरः ॥
यावन्ति रोमकूपानि कपिलाङ्गे भवन्ति हि ।
तावत्कोटिसहस्राणि वर्षाणां दिवि मोदते ॥
कृष्णां गां ददते यस्तु पटच्छन्नां स्वलङ्कृताम् ।
विधिवच्च द्विजातिभ्यो यमलोकं न पश्यति ॥
आयुरारोग्यमैश्वर्यं दाता कामांश्च मानसान् ।
श्वेतां गां ददते यस्तु दिव्यवस्त्रैरलङ्कृताम् ॥
घण्टामालाकुलां कृत्वा पुष्पमाल्यैरलङ्कृताम् ।
मुखे धूपः प्रदातव्यो घृतेनाऽऽस्यं च पूरयेत् ॥
सुवर्णशृङ्गाभरणा तथा रूप्यखुरा शुभा ।
पट्टच्छन्ना शुभा चैव दातव्या ध्यानयोगिने ॥
यस्तु दद्याच्च गां श्वेतां तस्य पुण्यफलं शृणु ।
जन्मप्रभृति यत्पापं यत्पापं मातृकं भवेत्[1] ॥
यच्च जन्मशतैस्तस्य तत्क्षणादेव नश्यति ।
गां ददाम्यहमित्येव वाचा पूज्येत सर्वशः ॥
पिता पितामहश्चैव तथैव प्रपितामहः ।

1 I. O. thus: A. S. B. and Udaipur Ms., मातृकं पैतृकं च यत

नरकस्था विमुच्यन्ते[1] सोमलोकं व्रजन्ति ते ॥
गौरीं चैव प्रयच्छेत्तु यस्तु गां वै पयस्विनीम्[2] ।
अहोरात्रोषितश्चैव कृतशौचो नरः सदा ॥
स्वर्णशृङ्गीं रौप्यखुरां मुक्तालांगूलशोभिताम् ।
घण्टामालाकुलां चैव गन्धपुष्पैरलङ्कृताम् ॥
कृतपश्चाऽम्बरः प्रोक्तो मुखे धूपं प्रदापयेत् ।
भक्ष्यभोज्यान्नपानेन ब्राह्मणान् भोजयेच्छुभान् ॥
गां ददानीह इत्येवं वाचा पूज्येत[3] सर्वशः ।
मातृकं पैतृकं चैव यच्चाऽन्यद्दुष्कृतं कृतम् ॥
पापं च तस्य तत्सर्वं दहत्यासप्तमं कुलम् ।
वर्षकोटिसहस्रं तु पुमान् स दिवि मोदते ॥
दासीदासैरलङ्कारैः स्तूयते सर्वजन्तुभिः ।
अरोगश्चैव जायेत तेजस्वी च भवेन्नरः ॥
नीलवर्णां च गां दद्याद्दोग्ध्रीं शीलगुणान्विताम् ।
स्वर्णशृङ्गीं रौप्यखुरां मुक्तालाङ्गूलभूषिताम् ॥
पट्टच्छन्नां शुभां सौम्यां घण्टाघोषैरलङ्कृताम् ।
पञ्चरङ्गेण सूत्रेण गलवेष्टनसंयुताम् ॥
रुद्रस्य प्रमुखे देया विष्णोश्च ब्रह्मणश्च ह ।
गां ददानीह इत्येवं वाचा पूज्येत सर्वदा ॥
पिता पितामहश्चैव तथैव प्रपितामहः ।

1 I. O., मुच्यन्ते सर्वपापेभ्यः
2 I. O., नरः शुचिः for पयस्विनीम्
3 A. S. B. and I. O., पूयेत

नरकस्थाः प्रमुच्यन्ते नीलां गां ददते तु ये ॥
वर्षकोटिसहस्राणि लोके तिष्ठति वारुणे ।
दधिक्षीरवहा नद्यो वर्त्तन्ते सर्वतः सदा ॥
घृतशैलाः प्रवर्तन्ते नवनीतस्य पर्वताः ।
कृषिभोगी बहुधनो दुर्भिक्षं न च पश्यति ॥

महाभारते

समानवत्सां कपिलां धेनुं दद्यात् पयस्विनीम् ।
सुव्रतां वस्त्रसञ्छन्नां ब्रह्मलोके महीयते ॥

'समानवत्सां' समानवर्णवत्साम् ।

रोहिणीतुल्यवत्सां च धेनुं दद्यात्पयस्विनीम् ।
सुव्रतां वस्त्रसंवीतामिन्द्रलोके महीयते ॥
समानवत्सां शबलां धेनुं दत्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंवीतामग्निलोके[1] महीयते ॥

'शबला' कर्बुरा ।

समानवत्सां कृष्णां तु धेनुं दद्यात्पयस्विनीम् ।
वातरेणुसवर्णान्तु सवत्सां कामदोहिनीम् ॥
प्रदाय वस्त्रसंवीतां वायुलोके महीयते ॥

'वातरेणुसवर्णां' धूम्रवर्णाम्[2] ।

1 I. O., सोमलोके

2 I. O. and A. S. B., धूसरवर्णां

समानवत्सां धूम्रां तु धेनुं दत्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंवीतां यमलोके महीयते ॥
अघ्न्यां हेमसवर्णां च सवत्सां गां पयस्विनीम् ।
प्रदाय वस्त्रसंवीतां कौबेरं[1] लोकमश्नुते ॥

'अघ्न्या' गौः ।

हिरण्यवर्णां पिङ्गाक्षीं सवत्सां कामदोह्नाम् ।
प्रदाय वस्त्रसंवीतां कौबेरं लोकमश्नुते ॥
पलालधूमवर्णाङ्गीं सवत्सां कामदोह्नाम् ।
प्रदाय वस्त्रसंवीतां पितृलोके[2] महीयते ॥

'कामदोह्ना' अनायासदोह्या ।

सवत्सां पीवरीं[3] दत्वा शितिकण्ठीमलंकृताम् ।
वैश्वदेवमसंबाध्यं स्थानं श्रेष्ठं प्रपद्यते ॥

'शितिकण्ठीं' कृष्णगलाम् ।

समानवत्सां गौरीं तु धेनुं दत्वा पयस्विनीम् ।
सुवस्त्रां[4] वस्त्रसंवीतां वसुलोकं समश्नुते ॥
पाण्डुकम्बलवर्णां तु सवत्सां कामदोह्नाम् ।

1 I. O., वारुणं
2 I. O., यमलेके
3 I. O., पार्विर्नी
4 I. O., सुव्रतां

प्रदाय वस्त्रसंवीतां साध्यानां लोकमश्नुते ॥
वत्सोपपन्नां नीलाङ्गीं वस्त्रवत्ससमन्विताम् ।
गन्धर्वाप्सरसां लोकं दत्वा प्राप्नोति मानवः ॥
गोप्रदानरतो याति भित्वा जलदसञ्चयान् ।
विमानेनाऽर्कवर्णेन दिवि राज्ये विराजते ॥
तं चारुवेषाः सुश्रोण्यः सहस्रं सुरयोषितः ।
रमयन्ति नरश्रेष्ठं गोप्रदानरतं नरम् ॥

स्कन्दपुराणे

यो नरो गां प्रयच्छेत सवत्सां कांस्यदोहनाम् ।
हेमशृङ्गीं रौप्यखुरां दुकूलक्षौमवासिताम् ॥
शय्यास्तरणसम्पन्नां बहुपुष्पफलैर्युताम् ।
ब्राह्मणां स्तर्पयित्वा तु गन्धमाल्यैरलङ्कृतान् ॥
देवैरध्यासितां गां तु सर्वैर्हस्तद्वयेन तु ।
मृदुबन्धेन बध्नीयादन्तश्श्लक्ष्णेन रज्जुना ॥
कुशाः सुवर्णं बीजानि तिलाः सिद्धार्थकास्तथा ।
प्रदद्यात्तां ततोऽद्भिश्च मन्त्रेणाऽनेन सुव्रत ॥
'सर्वदेवमयीं दोग्ध्रीं सर्वलोकमयीं तथा ।
सर्वलोकनिमित्तां गां सर्वदेवनमस्कृताम् ॥
प्रयच्छामि महासत्वमक्षयाय शुभामि'ति ।
एवं स दत्वा तां गां तु यत्र यत्र प्रजायते ॥
तत्र तत्र गता सा तान् जन्तूंस्तारयते भयात् ।
सर्वलोकान्तरं गत्वा रमते च यथा नरः ॥

स तथा मानुषे जातो गोसहस्री महाबलः ।
रूपवान् धनवांश्चैव बहुपुत्रश्च जायते ॥

इति कपिलागोदानम् ॥

## अथोभयतोमुखीदानम्

तत्र स्कन्दपुराणे

प्रसूयमानां यो गां तु दद्यादुभयतोमुखीम् ।
यथोक्तेन विधानेन स जातिस्मरतां लभेत् ॥

नन्दिपुराणे

यश्चोभयमुखीं दद्याद्गां विप्रे वेदवादिनि ।
देवाय चाऽप्यभीष्टाय स कुलान्येकविंशतिम् ॥
समुद्धृत्य नरः श्रेष्ठो नरकाद्ब्रह्मणोऽन्तिके ।
युगानि लोमतुल्यानि यदि श्रद्धापरो नरः ॥

मत्स्यपुराणे

मत्स्य उवाच

रुक्मशृङ्गीं रौप्यखुरां मुक्तालांगूलभूषिताम् ।
कांस्योपदोहनां राजन् सवत्सां द्विजपुङ्गवे ॥
प्रसूयमानां यो दद्याद्धेनुं द्रविणसंयुताम् ।
यावद्वत्सो योनिगतो यावद्गर्भं न मुञ्चति ॥

तावद्द्यौः पृथिवी ज्ञेया सशैलवनकानना ।

'द्रविणसंयुता'मिति दक्षिणारूपद्रविणसंयुता, 'भूरिदक्षिणे'त्यग्रेऽभिधानात् ।

ससमुद्रगुहा भूमिः सशैलवनकानना ।
चतुरन्ता भवेद्दत्ता पृथिवी नाऽत्र संशयः ॥
यावन्ति धेनुरोमाणि वत्सस्य च नराधिप ।
तावत्संख्यान् युगगणान् देवलोके महीयते ॥
पितॄन् पितामहांश्चैव तथैव प्रपितामहान् ।
उद्धरिष्यत्यसन्देहो नरकाद्भूरिदक्षिणा ॥
घृतक्षीरवहाः कुल्या दधिपायसकर्दमाः ।
यत्र यत्र गतिस्तस्य [1]भवेच्चेप्सितकामदा ॥
गोलोकः सुलभस्तस्य ब्रह्मलोकश्च पार्थिव ।

स्त्रियश्च तं चन्द्रसमानवक्त्राः
सुतप्तजाम्बूनदतुल्यरूपाः ।
महानितम्बस्तनमध्यवृत्ताः
सेवन्त्यजस्रं नलिनाभनेत्राः[2] ॥

[ आत्मविक्रयतुल्यास्ताः शाश्वतीर्वृद्धकौशिकाः ।
यो वै द्यूते धनं जित्वा गाः क्रीत्वा सम्प्रयच्छति ॥
स दिव्यमयुतं शक्रवर्षाणां फलमश्नुते ।

1 I. O., भवेदिच्छाकृता सदा
2 I. O., नालिनाभ्रवर्णाः ; A. S. B., नलिनेभनेत्राः

अन्तर्जाता सुक्रयज्ञानलब्धाः
प्राणक्रीताः निर्जिताश्चौकजाश्च ।
कृच्छ्रोत्सृष्टाः घोषणाभ्यागताश्च
द्वारे चैते गोविशेषाः प्रशस्ताः ॥ ]

ब्रह्मपुराणे

गां दद्याद्वेदपूर्णाय विप्राय गृहमेधिने ।
सुवर्णालंकृतशृङ्गीं वस्त्रघण्टाविभूषिताम् ॥
प्रत्यग्रां त्रिसमृद्धां च ललाटतटदर्पणाम् ।
रजतच्छन्नचरणां मुक्तालांगूलशोभिताम् ॥
कांस्योपदोहनां तृप्तां लवणादितृणोदकैः ।

'प्रत्यग्रा' नववयस्का । 'त्रिसमृद्धा' शीलक्षीरप्रसवगुण-युक्ता । 'तृप्ता लवणादितृणोदकैः' सर्वदा लवणादिपुष्टा ।

गवां पुच्छं गृहीत्वा तु ससुवर्णेन पाणिना ॥
गृहस्थो वेदविद्विप्रो वाचयेत्तु प्रतिग्रहम् ।
भोगसौख्यप्रदा चैषा धूम्राभा पापनाशनी ॥
कृष्णा स्वर्गप्रदा ज्ञेया गौरी च कुलवर्द्धनी ।
रक्ता रूपप्रदा ज्ञेया पीता दारिद्र्यघातिनी ॥
पुत्रप्रदा कृष्णसारा नीला धर्मविवर्द्धनी ।
कपिला सर्वपापघ्नी नानावर्णा च मोक्षदा ॥

'कृष्णसारा' कृष्णश्वेतवर्णा ।

1 [ ] A. S. B. has these additional verses, which come later in other manuscripts.

तथा

पीतोदकां जग्धतृणां दुग्धचोषां निरिन्द्रियाम्।
उन्मत्तामङ्गहीनां च मृतवत्सां महाशनाम् ॥
केशचेलपुरीषास्थिक्रव्यादां सन्धिनीं खलाम्।
पुटधेनुं यमलसूं नित्याभिगलितस्तनीम् ॥
न दद्याद्ब्राह्मणेभ्यश्च सदोषं वृषभं तथा ॥

'दुग्धचोषां' निजस्तनपायिनीम्। 'महाशना' बहुभक्षा। 'पुटधेनुः' बालवत्सा या च गर्भिणी।

महाभारते

न कृशां पापवत्सां वा वन्ध्यां रोगान्वितां तथा।
न चोभ्रां न परिश्रान्तां दद्याद्गां ब्राह्मणाय वै ॥

यमः

यो दद्याद्रूपयुक्तार्थां जीर्णां धेनुं च निष्फलाम्।
तमः सम्प्रविशेद्दाता द्विजं क्लेशेन योजयन् ॥

याज्ञवल्क्यः

यथा कथञ्चिद्दत्वा गां धेनुं वाऽधेनुमेव वा।
अरोगामपरिक्लिष्टां दाता स्वर्गे महीयते ॥

अङ्गिराः

गौरेकस्यैव दातव्या श्रोत्रियस्य विशेषतः।
सा हि तारयते पूर्वान् सप्त सप्त च सप्त च ॥

अन्तर्जाता सुक्रयज्ञानलब्धाः
प्राणक्रीताः निर्जिताश्चौकजाश्च ।
कृच्छ्रोत्सृष्टाः घोषणाभ्यागताश्च
द्वारे चैते गोविशेषाः प्रशस्ताः ॥ ]

ब्रह्मपुराणे

गां दद्याद्वेदपूर्णाय विप्राय गृहमेधिने ।
सुवर्णालंकृतशृङ्गीं वस्त्रघण्टाविभूषिताम् ॥
प्रत्यग्रां त्रिसमृद्धां च ललाटतटदर्पणाम् ।
रजतच्छन्नचरणां मुक्तालांगूलशोभिताम् ॥
कांस्योपदोहनां तृप्तां लवणादितृणोदकैः ।

'प्रत्यग्रा' नववयस्का । 'त्रिसमृद्धा'शीलक्षीरप्रसवगुणयुक्ता । 'तृप्ता लवणादितृणोदकैः' सर्वदा लवणादिपुष्टा ।

गवां पुच्छं गृहीत्वा तु ससुवर्णेन पाणिना ॥
गृहस्थो वेदविद्विप्रो वाचयेत्तु प्रतिग्रहम् ।
भोगसौख्यप्रदा चैषा धूम्राभा पापनाशनी ॥
कृष्णा स्वर्गप्रदा ज्ञेया गौरी च कुलवर्द्धनी ।
रक्ता रूपप्रदा ज्ञेया पीता दारिद्र्यघातिनी ॥
पुत्रप्रदा कृष्णसारा नीला धर्मविवर्द्धनी ।
कपिला सर्वपापघ्नी नानावर्णा च मोक्षदा ॥

'कृष्णसारा' कृष्णश्वेतवर्णा ।

1 [ ] A. S. B. has these additional verses, which come later in other manuscripts.

तथा

पीतोदकां जग्धतृणां दुग्धचोषां निरिन्द्रियाम् ।
उन्मत्तामङ्गहीनां च मृतवत्सां महाशनाम् ॥
केशचेलपुरीषास्थिक्रव्यादां सन्धिनीं खलाम् ।
पुटधेनुं यमलसूं नित्याभिगलितस्तनीम् ॥
न दद्याद्ब्राह्मणेभ्यश्च सदोषं वृषभं तथा ॥

'दुग्धचोषां' निजस्तनपायिनीम् । 'महाशना' बहुभक्षा । 'पुटधेनुः' बालवत्सा या च गर्भिणी ।

महाभारते

न कृशां पापवत्सां वा वन्ध्यां रोगान्वितां तथा ।
न चोभ्रां न परिश्रान्तां दद्याद्गां ब्राह्मणाय वै ॥

यमः

यो दद्याद्रूपयुक्तार्थां जीर्णां धेनुं च निष्फलाम् ।
तमः सम्प्रविशेद्दाता द्विजं क्लेशेन योजयन् ॥

याज्ञवल्क्यः

यथा कथञ्चिद्दत्वा गां धेनुं वाऽधेनुमेव वा ।
अरोगामपरिक्लिष्टां दाता स्वर्गे महीयते ॥

अङ्गिराः

गौरेकस्यैव दातव्या श्रोत्रियस्य विशेषतः ।
सा हि तारयते पूर्वान् सप्त सप्त च सप्त च ॥

नन्दिपुराणे

अपात्रे सा तु गौर्दत्ता दातारं नरकं नयेत् ।
कुलैकविंशत्या युक्तं ग्रहीतारं च पातयेत् ॥
विधिना तु यदा दत्ता पात्रे धेनुः सदक्षिणा ।
तदा तारयते जन्तून् कुलानामयुतैः सह[1] ॥
पात्रेष्वाध्यात्मिका मुख्या विशुद्धाश्चाऽग्निहोत्रिणः ।
देवताश्च तथा मुख्या गोदाने ह्येतदुत्तमम् ॥

महाभारते

वृत्तिग्लान्या सीदते चातिमात्रं
कृष्यर्थं वा होमहेतोः प्रसुत्याम् ।
गुर्वर्थं वा बालसंवृद्धये वा
धेनुं दद्यादेष कालो विशिष्टः ॥

'प्रसुत्यां' सोमयागे ।

तथा

न वधार्थं प्रदातव्या न कीनाशे न नास्तिके ।
गोजीवे न च दातव्या तथा गौः पुरुषर्षभ ॥

'कीनाशो' हलवाहकः ।

तथा

ददात्येतादृशानां वै नरो गाः पापकर्मणाम् ।
अक्षयं नरकं याति एवमाहुर्महर्षयः ॥

1 I. O., युतै for सह

एकां वै दशगुर्दद्याद्दश दद्याच्च गोशती ।
शतं सहस्रगुर्दद्यात् सर्वं तुल्यफलं हि तत् ॥
यश्चाऽऽत्मविक्रयं कृत्वा गाः क्रीत्वा सम्प्रयच्छति ।
यावतीः स्पर्शयेद्गाः स तावच्च फलमश्नुते ॥

'तावत्फलं' तावद्गोरोमसम्मितं स्वर्गरूपफलम् ।

तथा

सङ्ग्रामेष्वर्जयित्वा तु यो वै गाः सम्प्रयच्छति ।
आत्मविक्रयतुल्यास्ताः शाश्वतीर्वृद्धकौशिकाः[1] ॥
यो वै द्यूते धनं जित्वा गाः क्रीत्वा सम्प्रयच्छति ।
स दिव्यमयुतं शक्रवर्षाणां फलमश्नुते ॥

अन्तर्जाताः सुक्रयज्ञानलब्धाः
प्राणक्रीता निर्जिताश्चौकजाश्च ।
कृच्छ्रोत्सृष्टाः पोषणाभ्यगताश्च
द्वारैरेतैर्गोविशेषाः प्रशस्ताः ॥

'अन्तर्जाता' गर्भिण्य इति भारतपदप्रकाशिकाकारः[2] । 'सुक्रयलब्धाः' यथामूल्यक्रयलब्धाः । 'ज्ञानलब्धाः' विद्यालब्धाः । 'प्राणक्रीताः' भृतिलब्धाः । 'निर्जिता' युद्धादिना । 'ओकजाः' गृहजाः । 'कृच्छ्रोत्सृष्टाः पोषणाभ्यागताः' व्याध्यादिकृच्छ्राक्रान्ताः सत्यः स्वामिना यास्त्यक्ताः, स्वयं च पोषणं कृत्वा लब्धाः[3] ।

1 हेमा. p. 425, वृद्धकौशिकः; Udaipur Ms. has विद्धिकैशिके

2 Note

3 Reproduced by हेमा. p. 426

तथा

नष्टा दुष्टा दुर्बला व्याधिता वा
नो दातव्या या च मूल्यैरदत्तैः[1] ।
क्लेशैर्विप्रं योऽफलैः संयुनक्ति
तस्याऽवीर्याश्चाऽफलाश्चाऽपि लोकाः ॥

'मूल्यैरदत्तैः' स्वीकृतेति शेषः ।

तिस्रो[2] रात्रीस्त्वद्भिरुपोष्य भूमौ
तृप्ता गावस्तर्पितेभ्यः प्रदेयाः ।
वत्सैः पीताः सुप्रजाः सोपचारा-
स्त्र्यहं दत्वा गोरसैर्वर्तितव्यम् ॥

तथा

द्विजातिमभिसत्कृत्य श्वः कल्यमुपवेद्य च ।
प्रदानार्थे नियुञ्जीत रोहिणीं नियतव्रतः[3] ॥

'श्वः कल्यमुपवेद्य च' प्रातःकाल उपस्थानं कर्त्तव्यमिति ज्ञापयित्वा[4] ।

आह्वानं च प्रयुञ्जीत समङ्गे बहुले इति ।
प्रविश्य च गवां मध्यमिमां श्रुतिमुदाहरेत् ॥

1 I. O. muddles up the passage

2 हेमा. p. 455 cites the s'lokas which follow from महाभारत

3 A. S. B.

4 Reproduced by हेमा. pp. 455

'गौर्मे माता वृषभः पिता मे
दिवं शर्म मे प्रतिष्ठां प्रपद्ये ।
प्रपद्यैकां शर्वरीं मुख्यगोषु
मुनिर्वाणीमुत्सृजेद्गोप्रदाने' ॥

समतामेति वै गोभिः समसंख्यस्समव्रतः ।
एकाल्पगमनात्सद्यः कल्मषाद्विप्रमुच्यते ॥
उत्सृष्टवृषवत्सा हि प्रदेया सूर्यदर्शने ॥

'उत्सृष्टवृषवत्सा' उत्सृष्टौ त्यक्तौ वृषवत्सौ यया सा ।

तथा

त्रिविधं प्रतिपत्तव्यं वक्ष्यमाणावसिष्ठवत् ।

'त्रिविधं प्रतिपत्तव्यं' वक्ष्यमाणा तु वादादिप्रकारत्रयं ? गोप्रदानप्रवृत्तेन बोद्धव्यम् ।

ऊर्जस्विन्य ऊर्जमेधाश्च यज्ञो
गर्भोऽमृतस्य प्रतिष्ठा क्षितौ ।
ऋक्सम्प्रवाहाः पुण्यभावाः
प्राजापत्याः सर्वमित्यर्थवादः ॥

'ऊर्जस्विन्यः' बलोत्साहवत्यः । 'ऊर्जमेधाः' तेजोजितप्रज्ञाः प्रकृष्टबुद्धय इति यावत् । 'यज्ञगर्भः' यज्ञस्यैतदाज्यादिभिर्निष्पत्तेः । 'अमृतस्य प्रतिष्ठा' क्षीरस्य प्रतिष्ठा । स्थानम् । 'क्षितौ ऋक्सम्प्रवाहाः' ऋगिति नदीनाम । नदीवत्पृथिव्यां वहन्तीत्यर्थः । 'पुण्यभावाः' पुण्याश्रयाः[1] ।

1 Manuscripts corrupt, restored from हेमाद्रि. p. 455.

गावो ममैनः प्रणुदन्तु सौर्यैः
तथा सौम्याः स्वर्गयानाय सन्तु ।
आहूता मे ददतश्चाऽऽश्रयन्तु
तथा मुक्ताः सन्तु सर्वाशिषो मे[1] ॥
शेषोत्सर्गे कर्मभिर्देहमोक्षे
सरस्वत्यः श्रेयसि सम्प्रवृत्ताः ।
यूयं नित्यं पुण्यकर्मोपवत्यः
दिशध्वं मे गतिमिष्टां प्रपन्नाः ॥

'सौर्यैः' सूर्यप्रसूताः । 'शेषोत्सर्गे कर्मभिः देहमोक्ष' इति कर्मनाशेन देहत्यागे सति 'शेषोत्सर्गे' जन्मान्तरे दानार्थं सन्तु इत्यर्थः । 'पुण्यकर्मोपवत्यः' सुकृतप्राप्याः ।

'या वै यूयं सोऽहमाद्यैकभावो
युष्मान् दत्वा चाहमाल्यप्रदानाः ।
नमस्कृता मन एवोपपन्नाः
संरक्षध्वं सौम्यरूपोग्ररूपाः' ॥
एवं तस्याग्रे पूर्वमर्द्धं वदेद्वै
गवां दाता विधिवत् पूर्वदृष्ट्या ।
प्रतिब्रूयाच्छेषमर्धं द्विजातिः
प्रतिगृह्णन् गोप्रदाने विधिज्ञः ॥

'पूर्वमर्धं' 'या वै यूयमि'त्यादिकम् ।
'शेषमर्धं' 'नमस्कृता' इत्यादिकम् ॥

1 Manuscripts corrupt. restored from हेमाद्रि.

गां ददानीति वक्तव्यं अर्घ्यमुस्रावसु प्रदत् ।
ऊधस्या नमितव्या च वैष्णवीति च चोदनात् ॥

'अर्घ्यं' अर्घार्हम् । 'उस्रावसु' गोधनम् । 'प्रदत्' प्रददत् । ऊधस्यं क्षीरम् । तद्युक्ता 'ऊधस्या' ।

नाम सङ्कीर्तयेत्तस्या यथासङ्ख्यं यथोत्तरम् ।
फलं षट्त्रिंशदष्टौ च सहस्राणि च विंशतिः ॥

विंशतिः सहस्राणाम् ।

एवमेतान् गुणान् बुद्ध्वा गवादीनां यथाक्रमम् ।
गोप्रदाता समाप्नोति समस्तानष्टमे क्रमे ॥

'अष्टमे क्रमे' गवि दत्तायां गच्छन्त्यां अष्टमे पदे ।

गोदः शास्त्री निर्भयश्चार्घदाता
नस्योतदो वसुदाता च कामी ।
उषस्योढा[1] भारं नयंश्च विद्वान्
विख्यातास्ते वैष्णवाश्चन्द्रलोकाः ॥

'नस्योतदो' दान्तबुद्धिः । 'वसुदाता' द्रव्यदाता । 'कामी' काम्यफलवान् । 'उषस्योढा' उषस्यायाः गायत्र्या वाहयिता इत्यर्थः ।

गां वै दत्वा गोव्रती स्यात् त्रिरात्रं
निशां चैकां संवसेतेह ताभिः ।

1 A. S. B., व्याख्याताः

काम्याष्टम्यां वर्त्तितव्यं त्रिरात्रं
गवां रसैर्वा शकृता प्रस्रवैर्वा ॥

'काम्याष्टमी' रोहिणीयुक्ताऽष्टमी। 'रसैः' दध्यादिभिः। 'प्रस्रवैः' क्षीरैः।

वेदव्रती स्यात् वृषभप्रदाने
वेदावाप्तिः गोयुगस्य प्रदाने।
तस्या गवां विधिमासाद्य यज्वा
लोकानग्र्यान् विन्दते नाऽविधिज्ञः॥

'वेदव्रती' वेदव्रतफलवान्। 'गवां यज्वा' गोप्रदाता।

कामान् सर्वान् पार्थिवानेकसंस्थान्
यो वै दद्यात् कामदुग्धां च धेनुम्।
सम्यक् तास्स्युः हव्यकव्यौघवत्यः
तासामुक्तमायशस्यं प्रदानम्॥
न चाऽशिष्यायाऽव्रतायोपकुर्यात्
नाऽशान्ताय न च वक्रबुद्धये।
गुह्यो ह्ययं सर्वलोकस्य धर्मो
नेमान् धर्मान् यत्र तत्र प्रकल्पयेत्[1] ॥

इत्युभयतोमुखीदानम्॥

1 Manuscripts corrupt: restored from हेमा. pp. 455-475, where the entire passage is reproduced intact.

## ७

# अथ हेमगवीदानम्

तत्र देवीपुराणे

शुभां हेमगवीं गां च कारयेद्राजतान् खुरान् ।
तां वस्त्रप्रावृतां कृत्वा प्राप्नुयाल्लोकमुत्तमम् ॥
विचित्रचित्रैः पुष्पैश्च गन्धधूपनिवेदनैः ।
तथाऽक्षमानयेद्देवीं तत्रैतां गां समर्पयेत् ॥
देवि त्वदीयादादेशात्तव भक्तेषु दीयते ।
पुनस्तां विप्रराजाय दापयेच्छिवभाविने[1] ॥
अक्षय्यफलकामेन प्रायश्चित्तविशुद्धये ।
मनुना कीर्तमेतद्धि संयातेन पुरा किल[2] ॥
सप्त पूर्वान् परांस्तत्र रौद्रकिल्बिषसंस्थितान् ।
उद्धृत्य तारयेद्वत्स देवीलोकमनुत्तमम् ॥

'शुभा' शुद्धसुवर्णैस्सुघटिता । 'देवी' दुर्गा । 'शिवभाविने' शिवध्यायिने[3] ।

इति हेमगवीदानम् ॥

1 I. O., शिवभाजने

2 हेमा. p. 416 has मनुना चीर्णमेतद्धि सम्पतेयुर्नरा अधः

3 Reproduced by हेमा. p. 416

# अथ वृषभदानम्[1]

तत्र आदित्यपुराणे

योा वै ददात्यनड्वाहं सुशीलं साधुवाहनम् ।
उभयोः पार्श्वयोर्दत्वा छत्रोपानहकम्बलम् ॥
शीलवेदाङ्गसम्पन्ने इष्टे शिष्टे द्विजे नरः ।
पुष्ये वा जन्मनक्षत्रे अयने विषुवेषु च ॥
दत्वा तस्य अनड्वाहं तस्मिन् स्थाने महामुने ।
क्षुत्पिपासार्दितस्याऽपि अग्रतः प्रतिपद्यते ॥

महाभारते[2]

युवानमिन्द्रियोपेतं शतेन सह यूथपम् ।
गवेन्द्रं ब्राह्मणेन्द्राय भूरिशृङ्गमलङ्कृतम् ॥
वृषभं ये प्रयच्छन्ति श्रोत्रियाय परन्तप ।
ऐश्वर्याण्यभिजायन्ते जायमानेष्वतः पुनः[3] ॥

'शतेन' स्त्रीगवीनामिति शेषः । 'भूरिशृङ्गं' सुवर्णशृङ्गम्[4] । 'ऐश्वर्याण्यभिजायन्ते' ऐश्वर्यार्थमिति यावत् ।

1 cf. हेमा. p. 466

2 हेमा. p. 467.

3 A. S. B. and Udaipur Ms., जायमानाः पुनः पुनः

4 हेमा. p. 467, repeats this comment.

हृतिकण्ठमनड्वाहं सर्वरत्नैरलंकृतम् ।
दत्वा प्रजापतेर्लोकान् विशोकः प्रतिपद्यते[1] ॥

'हृतिकण्ठं' प्रलम्बगलकम्बलम् ।

अनड्वाहं ब्राह्मणायाऽथ धुर्यं
दत्वा युवानं बलिनं विनीतम् ।
हलस्य वोढारमनन्तवीर्यं
प्राप्नोति लोकान् दशधेनुदस्य[2] ॥

इति वृषभदानम् ॥

1 Cited by दानमयूख p. 188 from महाभारत

2 Cited from आदित्यपुराण by हेमाद्रि p. 466

९

# अथ कृष्णाजिनदानम्

तत्र विष्णुः[1]

अथ वैशाख्यां पौर्णमास्यां कृष्णमृगाजिनं सखुरं सशृङ्गं रौप्यखुरं मुक्तालांगूलभूषितं च कृत्वा आविकैर्वस्त्रैः पवित्रे च प्रसारयेत्। ततास्तिलैः प्रच्छादयेत्। सुवर्णनाभं च कुर्यात्। अहतेन वासोयुगेन प्रच्छादयेत्। सर्वरत्नगन्धैश्चाऽलङ्कुर्यात्। चतसृषु च दिक्षु चत्वारि तैजसानि पात्राणि क्षीरदधिमधुसर्पिःपूर्णानि निधायाऽऽहिताग्नये ब्राह्मणाय वासोयुगप्रच्छादिताय दद्यात्।

अत्र च गाथा भवन्ति

यस्तु कृष्णाजिनं दद्यात् सखुरं शृङ्गसंयुतम्।
तिलैः प्रच्छाद्य वासोभिः सर्वरत्नैरलङ्कृतम्॥

ससमुद्रगुहा तेन सशैलवनकानना।
चतुरन्ता भवेद्दत्ता पृथिवी नाऽत्र संशयः॥

वैशाख्यधिकारे वसिष्ठः

सुवर्णनाभं कृत्वा तु सखुरं कृष्णमार्गकम्।
तिलैः प्रच्छादयेद्यत्नात्[2] तस्य पुण्यफलं शृणु॥

1 हेमा. p. 656 ff.

2 A. S. B., यत्नात्; Udaipur Ms. reads wrongly दत्वात्

ससमुद्रगुहा तेन सशैलवनकानना ।
चतुरन्ता भवेद्दत्ता पृथिवी नाऽत्र संशयः ॥

विष्णुः

कृष्णाजिने तिलान् कृत्वा हिरण्यं मधुसर्पिषी ।
ददाति यस्तु विप्राय सर्वं तरति दुष्कृतम् ॥

मत्स्यपुराणे[1]

मनुरुवाच

कृष्णाजिनप्रदानस्य विधिं कालं ममाऽनघ ।
ब्राह्मणं च समाचक्ष्व तत्र मे संशयो महान् ॥

मत्स्य उवाच

वैशाखी पौर्णमासी च ग्रहणं शशिसूर्ययोः[2] ।
पौर्णमासी तु या माघे आषाढी कार्तिकी तथा ॥
उत्तरायणद्वादशी वा तस्यां दत्तं महाफलम् ।
आहिताग्निर्द्विजो यश्च तद्देयं तस्य पार्थिव ॥
यथा येन विधानेन तन्मे निगदतः शृणु ।
गोमयेनोपलिप्ते तु शुचौ देशे नराधिप ॥
आदावेव समास्तीर्य शोभितं वस्त्रमाविकम् ।
ततः सशृङ्गं सखुरमास्तरेत् कृष्णमार्गणम् ॥
कर्तव्यं रुक्मशृङ्गं तु रूप्यदन्तं तथैव च ।
लांगूलं मौक्तिकैर्युक्तं तिलच्छन्नं तथैव च ॥

1 दानमयूख., p. 234

2 Udaipur Ms., चन्द्रसूर्ययोः–हेमाद्रि. p. 657–8

तिलैरात्मसमं कृत्वा वाससाऽऽच्छादयेद्बुधः ।
सुवर्णनाभं तत्कुर्यात् अलङ्कुर्याद्विशेषतः[1] ॥
रत्नैर्गन्धैर्यथाशक्त्या तस्य दिक्षु च विन्यसेत् ।
कांस्यपात्राणि चत्वारि दिक्षु दद्याद्यथाक्रमम् ॥
मृण्मयेषु च पात्रेषु पूर्वादिषु क्रमेण तु ।
घृतं क्षीरं दधि क्षौद्रमेवं दत्वा यथाविधि ॥
चम्पकस्य च तथा शाखां अव्रणं कुम्भमेव च ।
बाह्योपस्थानकं कृत्वा शुद्धचित्तो निवेशयेत् ॥
जीर्णवस्त्रेण पीतेन सर्वाङ्गानि च मार्जयेत् ॥

'कांस्यपात्राणी'ति । चत्वारि कांस्यपात्राणि चतसृषु दिक्षु विन्यसेत् । अन्यानि च मृण्मयानि पात्राणि घृतक्षीरदधिमधुपूर्णानि, यथाक्रमं पूर्वादिदिक्षु स्थापनीयानीत्यर्थः । 'बाह्योपस्थानकं' दानप्रदानाद्बाह्ये उप समीपे स्थापनं यस्य स तथेति कुम्भविशेषणम् । 'मार्जयेदि'ति दानानन्तरं स्नात्वेति शेषः[2] ।

धातुमयानि पात्राणि पादेष्वस्य प्रदापयेत् ।
यानि काम्यानि पापानि मया लोभात्कृतानि वै ॥
लोहपात्रप्रदानेन प्रणश्यन्तु ममाऽऽशु वै ।
तिलपूर्णं तु तत्कृत्वा वामपादे निवेशयेत् ॥

1 विचक्षण इति पाठान्तरम्

2 Paraphrased by दानमयूख, p. 235., and reproduced verbation by हेमा. p. 658, whom नीलकण्ठ cites.

यानि पापानि काम्यानि[1] कर्मोत्थानि कृतानि वै ।
कांस्यपात्रप्रदानेन तानि नश्यन्तु मे सदा ॥
मधुपूर्णं ततः कृत्वा पादे वै दक्षिणे न्यसेत् ।
परापवादपैशुन्यात् [2]पृष्ठमांसस्य भक्षणात् ॥
तत्रोत्थितं च यत्पापं ताम्रपात्रात् प्रणश्यतु ।
कन्यानृतं गवां चैव परदारप्रधर्षणम् ॥
रौप्यपात्रप्रदानाच्च क्षिप्रं नाशं प्रयातु मे ।
ऊर्द्ध्वपादे त्विमे कार्ये ताम्रस्य रजतस्य च ॥
जन्मजन्मसहस्रेण कृतं पापं कुबुद्धिना ।
सुवर्णपात्रदानात्तन्नाशयाऽऽशु जनार्दन ॥

'ऊर्द्ध्वपादे' अग्रपादयोः । एकवचनमत्राऽविवक्षितम्[3] ।

हेममुक्ताविद्रुमं च दाडिमं बीजपूरकम् ।
प्रशस्तपात्रं श्रवणे खुरे शृङ्गाटकानि वा ॥
एवं कृत्वा यथोक्तेन सर्वशाकफलानि च ।
तत्प्रतिग्रहविद्विद्वान्[4] आहिताग्निर्द्विजोत्तमः ॥
स्नातो वस्त्रयुगच्छन्नः स्वशक्त्या चाऽप्यलंकृतः ।
प्रतिग्रहश्च तस्योक्तः पुच्छदेशो महीपते ॥

1 A. S. B., यानि पापानि अकाम्यानि, which is an improvement in sense.

2 I. O., घृष्टमांसस्य ; दानमयूख p. 236 has वृथामांस; Manu condemns वृथामांसभक्षण, ( V. 34. )

3 हेमा. p. 659, repeats and expands this comment.

4 Defective in A. S. B.

[तत एव समीपे तु मन्त्रमेतमुदीरयेत्।
'कृष्ण कृष्ण बलो देवः कृष्णाजिनधरस्तथा ॥
तद्दानाद्धूतपापस्य प्रीयतां मे नमो नमः।
त्रयस्त्रिंशत्पुराणानां त्वमाधारे व्यवस्थितः ॥
कृष्णोऽसि मूर्तिमन्साक्षात्कृष्णाजिन नमोऽस्तु ते'।][1]
सुवर्णनाभिकं दद्यात् प्रीयतां वृषभध्वजः' ॥
अनेन विधिना दद्याद्यथावत् कृष्णमार्गणम्।
न स्पृश्यः स द्विजो राजन् चितियूपसमो हि सः ॥
दाने च श्राद्धकाले च दूरतः परिवर्जयेत्।
स्वगृहात् प्रेष्य तं विप्रं मण्डले स्नानमाचरेत् ॥
पूर्णकुम्भेन राजेन्द्र शाखया चम्पकस्य च।
कृत्वा चाऽऽचार्यकलशं मन्त्रेणाऽनेन मूर्द्धनि ॥
'आप्यायस्व समुद्रज्येष्ठा' ऋचो जप्यास्तु षोडश।

'आप्यायस्व समेतु ते' इत्यष्टौ। 'समुद्रज्येष्ठा' इत्यष्टौ। एवं षोडश[2]।

अहते वाससी वीतः आचान्तः शुचितामियात्।
तद्वस्त्रकुम्भसहितं नीत्वा क्षेप्यं[3] चतुष्पथे ॥

'वीतः' परिहितवान्।

1 Omitted in I. O., and in हेमा. p. 659
आप्यायस्व ( ऋ. सं. I. 6. 22., VI. 8. 21 )

2 समुद्रज्येष्ठा" ( ऋ. सं. V. 4. 13 ).

3 A. S. B., प्रेक्ष्यं for क्षेप्यं

कृताऽनेन मया तुष्टिः न सा शक्याऽमरैरपि[1] ।
वक्तुं च नृपतिश्रेष्ठ तथाऽप्युद्देशतः शृणु ॥
समग्रभूमिदानस्य फलं प्राप्नोत्यसंशयः[2] ।
सर्वांश्च लोकान् जयति[3] कामचारी विहङ्गमः ॥
आभूतसम्प्लवं यावत्स्वर्गं प्राप्नोत्यसंशयः ।
न पितृपुत्रमरणं वियोगं भार्यया सह ॥
धनधान्यपरित्यागं नैव चेहाऽश्नुयात्[4] क्वचित् ।

कृष्णाजिनं कृष्णमृगस्य चर्म्म
दत्वा द्विजेन्द्राय समाहिताय ।
यथोक्तमेतन्मरणं न शोचेत्
प्राप्नोत्यभीष्टं मनसः फलं तत् ॥

वैष्णवपदाधिकारे कालिकापुराणे[5]

ये च रुक्मादिपात्रे तु [6]कृत्वा वह्निं ददन्ति वै ।
तिलद्रोणसमायुक्तं वस्त्रयुग्माभिवेष्टितम् ॥
पलादूर्द्धमथार्द्धं वा[7] विभवाद्धेमसंयुतम् ।
सूक्ष्मवस्त्रेण युग्मेन अन्येनाऽऽच्छादयेद्द्विजम् ॥

1 A. S. B.

2 हेमा. p. 660 and दानमयूख. p. 237 have फलं प्राप्नोति मानवः

3 *Ibid*, चरति for जयति

4 *Ibid*, न चैवेहाप्नुयात्

5 हेमा. p. 661.

6 हेमा. p. 661., हुत्वा वह्निं ददन्ति वा

7 A. S. B., विभवाद्धेमसंयुतं ; हेमा. p. 661, वित्तवान् हेमसंयुतम् ; Udaipur Ms. has विभवेद्धेमसंयुतम्

सोदकं चाऽपरं रुक्मं सतिलं न्यस्य तत्करे ।
ततः कृष्णाजिनं दद्यात्तिलद्रोणान्वितं च यत् ॥
दत्वा तु भोजयेत्तत्र [1]नत्वाङ्गं च विसर्जयेत् ।
अयने विषुवे चैव चन्द्रसूर्यग्रहे तथा ॥
युगादौ वा प्रयच्छन्ति विधिना ये तु वै द्विजे ।
तेऽपि तत्पदमासाद्य दशांशं ब्रह्म आयुषः ॥
क्रीडन्ति विविधैर्भोगैः कल्परूपगुणान्विताः ।
अनेन च विधानेन दशद्रोणविधायकः ॥
आब्रह्माण्डभवं कालं मोदते स पुरोत्तमे ।
यो घटं पयसा पूर्णं हेमपद्मनियोजितम् ॥
सम्पूज्य[2] वस्त्रयुग्मेन दद्यात् सोऽपि व्रजेद्ध्रुवम् ।

मरीचिः[3]

कृष्णाजिनोभयमुखीं यो दद्यादाहिताग्नये ।
सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति ॥

इति कृष्णाजिनदानम् ॥

1 हेमा. p. 661, नत्वा चैव

2 I. O. and हेमा. p. 661 read संपूज्य; A. S. B. and Udaipur Ms. read संपूर्ण

3 cf. दानमयूख. p. 234. हेमा. p. 655.

१०

# अथ भूमिदानम्

तत्र दाने बृहस्पतिः

सुवर्णं रजतं वस्त्रं मणिरत्नवसूनि च ।
सर्वमेतद्भवेद्दत्तं वसुधां यः प्रयच्छति ॥

फालकृष्टां महीं दत्वा सबीजां सस्यशालिनीम् ।
यावत् सूर्यकृता लोकास्तावत् स्वर्गे महीयते ॥

यत्किञ्चित् कुरुते पापं पुरुषो लोभमोहितः ।
तत्सर्वं भूमिदानेन क्षिप्रमेव प्रणश्यति ॥

अपि गोचर्ममात्रेण सम्यग् दत्तेन मानवः[1] ।
धौतपापो विशुद्धात्मा स्वर्गे लोके महीयते ॥

दशहस्तेन दण्डेन त्रिंशद्दण्डान्निवर्त्तनम् ।
दश तान्येव गोचर्म ब्राह्मणेभ्यो ददाति यः ॥

विप्राय दद्यात्सुगुणान्विताय
तपोभिजुष्टाय जितेन्द्रियाय ।
यावन्मही तिष्ठति सागरान्ता
तावत्तपस्तस्य भवेदतुल्यम् ॥

यथाऽप्सु पतितः शक्र तैलबिन्दुः प्रसर्पति ।
एवं भूमिकृतं दानं सस्ये सस्ये प्ररोहति ॥

1 Cited in हेमा. p. 487

शङ्खं भद्रासनं छत्रं वराः प्रावरणाः कृताः[1] ।
भूमिदानस्य पुण्यानि फलमेतत्पुरन्दर ॥
आदित्यो वरुणो विष्णुर्ब्रह्मा सोमो हुताशनः ।
शूलपाणिश्च भगवानभिनन्दति भूमिदम् ॥
सौवर्णा यत्र प्रासादाः वसोर्धारा च कामदा ।
गन्धर्वाप्सरसो यत्र तत्र गच्छन्ति भूमिदाः ॥

तथा

बहुभिर्वसुधा दत्ता राजभिः सगरादिभिः[2] ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
षडशीतिसहस्राणि योजनानां वसुन्धरा ।
दत्ता स्वल्पाऽपि देवेन्द्र सर्वकामप्रदायिनी ॥
भूमिं यः प्रतिगृह्णाति यश्च भूमिं प्रयच्छति ।
उभौ तौ पुण्यकर्माणौ नियतौ स्वर्गगामिनौ ॥
यस्तु दद्यान्महीं राजन् ब्राह्मणायाऽग्निहोत्रिणे ।
स याति परमं स्थानं गृह्णानश्च न संशयः ॥
इक्षुभिः सन्ततां भूमिं यवगोधूमशालिनीम् ।
यो ददाति सुरश्रेष्ठ पुनरावर्त्तते न सः ॥
श्रोत्रियाय कुलीनाय विनीताय तपस्विने ।
वृत्तस्थाय दरिद्राय सर्वभूतहिताय च ॥
ईदृशाय सुशुद्धाय दत्ता स्वल्पाऽपि वासव[3] ।

1 I. O., रत्नानि वरवारणाः ; A. S. B., वराश्चावरवारणाः
2 पद्मपुराण, Ānandāśrama edn. p. 1310.
3 So A. S. B.

कुलानि तारयेत् वीर सप्त सप्त च सप्त च ॥
सहस्रमेव धेनूनां शतं वाऽनडुहां समम् ।
दशानडुत्समं यानं दशयानसमो हि यः ॥
दशवाजिसमा कन्या भूमिदानं च तत्समम् ।
भूमिदानात्परं नाऽस्ति विद्यादानं ततोऽधिकम् ॥

वृद्धवसिष्ठः

यत् किञ्चित् कुरुते पापं जन्मप्रभृति मानवः ।
अपि गोचर्ममात्रेण भूमिदानेन नश्यति[1] ॥
गवां शतं वृषश्चैको यत्र तिष्ठेदयन्त्रितः ।
तद्वै गोचर्ममात्रन्तु प्राहुर्वेदविदो जनाः ॥

तथा

दशहस्तेन दण्डेन दशहस्तान् समन्ततः ।
पञ्च वाऽप्यधिकं दद्यादेतद्गोचर्म चोच्यते ॥

पञ्चलाङ्गलप्रस्तावे मत्स्यपुराणे[2]

दण्डेन सप्त हस्तेन त्रिंशद्दण्डनिवर्त्तनम् ।
त्रिभागहीनं गोचर्म मानमाह प्रजापतिः[3] ॥
मानेनाऽनेन यो दद्यान्निवर्तनशतं बुधः ।
विधिनाऽनेन तस्याऽऽशु क्षीयते पापसंहतिः ॥

1 I. O., शुद्ध्यति

2 हेमा. p. 488

3 On the differences between the measurement standards of प्रजापति and मनु, see शुक्रनीतिसार ( edn. Oppert ) pp. 17-18

तदर्द्धमथ यो दद्यादपि गोचर्ममात्रकम् ।
भवनस्थानमात्रं गां सोऽपि पापैः प्रमुच्यते ॥

संवर्त्तः

सर्वेषामेव दानानामेकजन्मानुगं फलम् ।
हाटकीक्षतिगौरीणां सप्तजन्मानुगं फलम् ॥

प्रकरणात् 'गौर्यो' ऽत्र गावः । वेदे "मध्वः पिबन्ति गौर्यः" इति गोषु प्रयोगदर्शनात् ।

तथा

अग्नेरपत्यं प्रथमं सुवर्णं
भूर्वैष्णवी सूर्यसुताश्च गावः ।
तेषामनन्तं फलमश्नुवीत
यः काञ्चनं गाश्च महीश्च दद्यात्[1] ॥

श्रीरामायणे विश्वरूपकपिलं प्रति

गोदानानि पवित्राणि भूमिदानानि यानि च ।
सुवर्णदानानि तथा यावल्लोमानुगानि च ॥

बृहस्पतिः[2]

आस्फोटयन्ति पितरः प्रवदन्ति पितामहाः ।
भूमिदोऽस्मत्कुले जातः सोऽस्मान् सन्तारयिष्यति ॥

1 पद्मपुराण, p. 1310

2 हेमा. p. 489

नन्दिपुराणे

दत्वा तु भूमिं पुरुषः साश्रयां सस्यशालिनीम्[1] ।
सुमेध्यां रम्यसंस्थानां फलवृक्षमनोरमाम् ॥
अनूषरामनाबाधां पात्रे बहुगुणान्विते ।
अप्येकपुरुषाधारां दत्वा भूमिं महात्मने ॥
दश कल्पान्निवसति स्वर्गे विगतपातकः[2] ।

आदित्यपुराणे

यस्तु गोचर्ममात्रां वै प्रयच्छति वसुन्धराम् ।
विमुक्तिः सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥
षष्टिवर्षसहस्राणि स्वर्गे तिष्ठति भूमिदः ।
आच्छेत्ता चाऽनुमन्ता च तान्येव नरकं वसेत[3] ॥
स्वदत्तां परदत्तां वा यो हरेद्वै वसुन्धराम् ।
विष्ठायां च कृमिर्भूत्वा पितृभिस्सह मज्जति[4] ॥

तथा[5]

अपि पापकृतां राज्ञां प्रतिगृह्णन्ति साधवः ।
पृथिवीं नान्यदिच्छन्ति पावनं ह्येतदुत्तमम् ॥

1 I. O., सस्यदायिनीम्, a variant noted in हेमा. p. 489
2 I. O., विजितपातकः
3 This verse is cited from विष्णुधर्मोत्तर by हेमा. on p. 486, and from महाभारत, on p. 490. It occurs in पद्मपुराण, p. 1310 with the variant तावद्वै नरकं वसेत्
4 पद्मपुराण p. 1310
5 The following verses are cited by हेमा. p. 478 as from महाभारत

नामाऽस्याः प्रियदत्तेति गुह्यं देव्याः सनातनम् ।
दानं वाऽप्यथवाऽदानं नामाऽस्याः परमं प्रियम् ॥
[ सङ्ग्रामे वा तनुं जह्याद्दद्याद्वा पृथिवीमिमाम्[1] ।
इत्येता क्षुद्रबन्धूनां वदन्ति परमाशिषः ॥
यत्र तां दक्षिणां दद्यात् पृथिवीं पृथिवीपतिः ।
पुनश्च जननं प्राप्य स भवेत् पृथिवीपतिः ॥ ]
ये चाऽन्ये भूमिमिच्छेयुः कुर्युरेव न संशयः ।
रत्नोपकीर्णवसुधां यो ददाति द्विजातिषु ॥
स मुक्तः सर्वकलुषै रुद्रलोके महीयते ।
इक्षुभिः सहितां भूमिं यवगोधूमसङ्कुलाम्[2] ॥
गोष्ठमातङ्गसम्पूर्णां बहुबीजसमन्विताम् ।
निधिगर्भां दद‍्द्भूमिं सर्वरत्नपरिच्छदाम् ॥
अक्षयान् लभते लोकान् भूमिरत्नं हि तस्य तत् ।
विधूय कलुषं सर्वं विरजाः सम्मतः सताम् ॥
लोके महीयते शम्भोः यो ददाति वसुन्धराम् ।

दाने बृहस्पतिः[3]

सुवर्णदानं गोदानं भूमिदानं च वासव ।
एतत्प्रयच्छमानो हि सर्वपापैः प्रमुच्यते ॥

1 Not found in हेमा.

2 I. O., संयुताम्

3 पद्मपुराण, p. 1310. It begins. हिरण्यवस्त्रगोदानं भूमिदानं च वासव See हेमा. ff. 481-2, which has slight variations.

महाभारते

शीतवातातपैर्युक्तां गृहभूमिं सुसंस्कृताम् ।
प्रदाय सुरलोकं स पुण्यान्तेऽपि न चाल्यते ॥
न चोषरां न निर्दग्धां भूमिं दद्यात्कथञ्चन ।
न श्मशानपरीतां च न च पापनिषेविताम् ॥

इति भूमिदानम् ॥

## ११

# अथ सुवर्णदानम्

तत्र बृहस्पतिः[1]

गृहादिके पुण्यफलं भवेन्मूल्यानुसारतः ।
तस्मात्सर्वप्रदानानां हिरण्यमधिकं स्मृतम् ॥
यथा [2]सान्तनिकादीनां हेम्नां संपद्यते क्रिया ।
तथा न गृहदानेन हिरण्यमधिकं ततः ॥

नन्दिपुराणे[3]

कृष्णलाः पञ्च माषास्तु माषैः षोडशभिः स्मृतम् ।
सुवर्णमेकं तद्दानाद्दाता स्वर्गमवाप्नुयात् ॥
सुवर्णस्य तु शुद्धस्य सुवर्णं यः प्रयच्छति ।
सुवर्णस्य शतं तेन दत्तं भवति शाश्वतम्[4] ॥

तथा

तस्मात् सर्वात्मना पात्रे दद्यात् कनकदक्षिणाम् ।
अपात्रे पातयेद्दत्तं सुवर्णं नरकार्णवे ॥

1 हेमा. p. 545

2 A. S. B., सन्तानकादीनां

3 हेमा. p. 549

4 I. O. gives this after तथा. It is given by हेमाद्रि at the end of another passage on p. 550

प्रमादतस्तु तन्नष्टं तावन्मात्रं नियोजयेत् ।
अन्यथा स्तेययुक्तस्स्याद्धेम्न्यदत्ते विनाशिनि ॥
दानार्थमेव तत्सृष्टं ह्युत्कृष्टं स्वर्गसाधनम् ।
दानात्परं सुवर्णस्य विधिरेव न विद्यते ॥

सुवर्णमित्यनुवृत्तौ कालिकापुराणे[1]

पूतमेतत्परं पुण्यं पुरा कार्येषु नित्यशः ।
धारयन्ति यतः सर्वे मङ्गलार्थमरोगतः[2] ॥
अतः पापानि सर्वाणि पात्रेभ्यो विधिपूर्वकम् ।
दत्तं पुनाति काले च देशे च हरसन्निधौ ॥
श्रूयतां येन रामेण विधिना प्राक् तपोधन ।
प्रदत्तं काञ्चनं पूर्वं रैचीक्येन महात्मना ॥
सर्वहेममयं यज्ञमिष्ट्वा विप्राः प्रतर्पिताः ।
हैमैराभरणैः पूज्य दत्तं पलशतं तथा ॥
भूय एव तुलां तेन स्वयमारोप्य यत्नतः ।
हेम द्वितीयपार्श्वे च द्विजातिभ्यो ददौ स्वयम् ॥
भूयोऽपि तन्मयान्येव [3]पूर्णपात्राणि तेन च ।
प्रभासादिषु[4] तीर्थेषु ब्राह्मणेभ्यो ददौ तदा ॥
गवां च दशवर्णानां विप्रं कृत्वा पृथक् पृथक् ।

1 हेमा. p. 547

2 Udaipur Ms. reads अमलार्थं मलोज्झितां

3 हेमा. p. 547, सूर्यपात्राणि

4 Udaipur Ms. gives प्रयागादिषु as an alternative reading. See Harihara Bhaśya on पारस्करगृह्यसूत्र where the acts to be done in specific places are catalogued.

सहस्रं च गवाश्चाऽपि[1] सवत्सानां सुरूपिणाम् ॥
बध्वा कम्बलमाक्रम्य पलान्येकादशैव तु ।
एकैकस्य पृथक्त्वेन दत्तं हेम तु तेन वै ॥
कारयित्वा सुपद्मानि जातरूपमयानि च ।
भ्रमता तीर्थलिङ्गानां मूर्ध्नि दत्तानि तेन वै ॥
तन्मयाभरणैः पूज्य शतशोऽथ सहस्रशः ।
सम्पूज्य तर्पिता विप्रा भूयस्तेनैव मानद ॥
पद्माश्चैव पताकाश्च मालाश्चैव विशेषतः ।
रुद्रादीनां नियुक्तास्तु कारयित्वा गृहे गृहे ॥
उपवीतं च यष्टिश्च मेखला पादुके तथा ।
लेखनी मषिपात्रं च दत्तं विप्रेषु तेन वै ॥
यानं सोपस्करं[2] कृत्स्नमासनं धाम तन्मयम् ।
द्विजेभ्यश्च प्रदत्तानि कारयित्वा सहस्रशः ॥
ग्रहाणां देवतानां च कृत्वा रूपाणि भूरिशः[3] ।
न्यस्तानि विधिवद् पूज्य द्विजानां चैव मन्दिरे ॥
काञ्चनीं रोदसीं[4] स्पृष्ट्वा नगोदधिसमन्विताम् ।
पुण्यौषधिवनैर्युक्तां ददौ विप्रेभ्य एव सः ॥
एवमाद्यैरनेकैश्च प्रकारैः कनकं पुरा ।
पापापनुत्तये दत्तं पात्रमासाद्य भूयसः ॥

1 हेमा. p. 547., सहस्रं च सहस्रं च'
2 हेमा. p. 548, भानुसोपस्करं
3 Manuscripts read भूयशः
4 I. O., रौरवीं

आदित्यपुराणे[1]

आदित्योदयसम्प्राप्तौ विधिमन्त्रपुरस्कृतम् ।
ददाति काञ्चनं यो वै दुःस्वप्नं प्रतिहन्ति सः ॥
ददात्युदितमात्रे यः तस्य पापं विलीयते ।
मध्याह्ने ददते रुक्मं हन्ति पापमनागतम् ॥
ददाति पश्चिमां सन्ध्यां यः सुवर्णं धृतव्रतः ।
ब्रह्मवाय्वग्निसोमानां सालोक्यमुपयाति सः ॥
सुवर्णमक्षयान् दत्वा लोकांश्चाऽऽप्नोति पुष्कलान् ।
यस्तु सञ्जनयत्यग्निं[2] आदित्योदयनं प्रति ॥
दद्याद्वै व्रतमुद्दिश्य सर्वान् कामान् समश्नुते ।
यं देवमर्चयेत्तेन यस्य चैव प्रयच्छति ॥
तस्य लोके निवसति नित्यं चैव ददाति यः ॥

महाभारते[3]

पिण्डदानपरितुष्टस्वप्नदृष्टपितृदत्तोपदेशकथने युधिष्ठिरं प्रति भीष्मवाक्यानि—

वेदोपनिषदे चैव पर्वकर्मसु दक्षिणा ।
सर्वक्रतुषु चोद्दिष्टा भूमिर्गावोऽथ काञ्चनम् ॥
ततः श्रुतिस्तु परमा सुवर्णं दक्षिणेति वै ।

1 हेमा. p. 551
2 हेमा. p. 552 संज्वलयित्वाग्निं
3 हेमा. p. 548 reproduces the whole passage with this introduction.

तदिदं सम्यगारब्धं त्वयाऽद्य भरतर्षभ ॥
किन्तु भूमेर्गवां चाऽर्थे सुवर्णं दीयतामिति ।
एवं वयं च धर्मज्ञ सर्वे चाऽस्मत्पितामहाः ॥
तारिता[1] वै तरिष्यन्ति पावनं परमं हि तत् ।
दश पूर्वान् दशैवाऽन्यान् तथा सन्तारयन्ति ते ॥
सुवर्णं ये प्रयच्छन्ति एवं मां पितरोऽब्रुवन् ॥

श्रीरामायणे

रामं प्रति वसिष्ठवाक्यानि[2]—

सर्वरत्नानि निर्मन्थ्य तेजोराशिसमन्वितम् ।
सुवर्णमेभ्यो विप्रेन्द्र रत्नं परममुत्तमम् ॥
एतस्मात्करणादेव गन्धर्वोरगराक्षसाः ।
मनुष्याश्च पिशाचाश्च प्रयता धारयन्ति तत् ॥
मुकुटै रत्नसंयुक्तैरलङ्कारैः पृथग्विधैः ।
सुवर्णे विधृते तत्र विराजन्ते भृगूत्तम ॥
तस्मात्सर्वपवित्रेभ्यः पवित्रं परमं स्मृतम् ।
पृथिवीं गाश्च दत्वेह तथाऽन्यदपि किञ्चन ॥
विशिष्यते सुवर्णस्य दानं परमकं विभो ।
अक्षयं पावनं चैव सुवर्णं मम रज्यते ॥
प्रयच्छेद्द्विजमुख्येभ्यः पावनं ह्येतदुत्तमम् ।
सुवर्णमेव सर्वत्र दक्षिणासु विधीयते ॥

1 Udaipur Ms. and A. S. B., तारितैव भविष्यन्ति
2 हेमा. p. 548

सुवर्णं ये प्रयच्छन्ति सर्वदास्ते भवन्त्यतः ।
अग्निर्वै देवताः सर्वाः सुवर्णं च तदात्मकम् ॥
तस्मात्सुवर्णं ददता दत्ताः स्युः सर्वदेवताः ॥

इति सुवर्णदानम् ॥

# १२

# अथ विद्यादानम्

तत्र आदित्यपुराणे[1]

त्रीणि तुल्यप्रदानानि त्रीणि तुल्यफलानि च ।
सर्वकामदुघा धेनुर्गावः पृथ्वी सरस्वती ॥

तथा

सर्वेषामेव दानानां ब्रह्मदानं विशिष्यते ।
कार्यं तु गोमहीवासस्तिलकाञ्चनसर्पिषाम्[2] ॥

'ब्रह्मदानं' वेददानम् ।

याज्ञवल्क्यः

सर्वधर्ममयं[3] ब्रह्म प्रदानेभ्योऽधिकं यतः ।
तद्ददत् समवाप्नोति ब्रह्मलोकमविच्युतः ॥

'प्रदानेभ्यः' अल्पेभ्य इति शेषः ।

1 हेमा. p. 493

2 हेमा. p. 498, A. S. B. and Udaipur Ms. so attribute this śloka, which is found also in मनुस्मृति, IV, 233.

3 हेमा. p. 498 सर्वधर्ममयं; Udaipur Ms. has सर्वज्ञानमयं

यमः[1]

य इमां पृथिवीं दद्यात्सर्वकामोपशोभिताम् ।
दद्याच्छास्त्रञ्च विप्राणां तद्वच्चैतानि तत्समम् ॥

'तत्' सर्वरत्नोपशोभितपृथिवीदानम् । 'एतानि' पूर्वोक्तानि दानानि[1] तदुभयं विद्यादानसमम्[2] ।

देवीपुराणे[3]

विद्यादानं प्रवक्ष्यामि येन तुष्यन्ति मातरः ।
लिख्यते दीयते येन विधिना तच्छृणुष्व मे ॥
सिद्धान्तमोक्षशास्त्राणि वेदाः स्वर्गादिसाधकाः ।
वेदाङ्गानीतिहासाश्च देया धर्मविवृद्धये[4] ॥
गारुडं बालतन्त्रं च भूततन्त्राणि भैरव ।
शास्त्राणां पठनाद्दानान्मातरः फलदा नृणाम् ॥
ज्योतिषं वैद्यशास्त्रं च कलाः काव्यं शुभागमः ।
दानादारोग्यमाप्नोति गान्धर्वं लभते [5]फलम् ॥
विद्यया वर्तते लोको धर्माधर्मं च विन्दति ।
तस्माद्विद्या सदा देया दृष्टादृष्टफलार्थिभिः ॥

तथा[6]

शृण्वतां जायते भक्तिस्ततो गुरुमुपासते ।

1 हेमा. p. 507
2 हेमा. p. 507 reproduces the prose comment
3 हेमा. pp. 524
4 हेमा. p. 495
5 हेमा. p. 495, पदम्
6 हेमा. p. 524

सर्वविद्यागमा भक्तिः विद्यायुक्ताश्रिता नृप ॥
विद्याविवेकबोधेन शुभाशुभविचारणात्[1] ।
विन्दते सर्वकामाप्तिं तस्माद्विद्या परा मता ॥
विद्यादानात्परं दानं न भूतं न भविष्यति[2] ।
येन दत्तेन चाऽऽप्नोति शिवं परमकारणम् ॥
श्रीताडपत्रके सश्रे समे पत्रसुसश्चिते[3] ।
विचित्रकश्चिकापार्श्वे चर्मणा सम्पुटीकृते ॥
रक्तेन वाऽथ कृष्णेन मृदुना रञ्जितेन वा ।
दृढसूत्रनिबद्धेन [4]एवं चैव कृतेन वै ॥
यस्तु द्वादशसाहस्रीं संहितामुपलेखयेत् ।
ददाति चाऽभियुक्ताय स याति परमां गतिम् ॥
पूर्वोत्तरे प्लवे देशे सर्वबाधाविवर्जिते ।
गोमयेन शुभेनैव कुर्यान्मण्डलकं बुधः ॥
चतुर्हस्तप्रमाणेन शुभं च चतुरस्रकम् ।
तस्य मध्ये लिखेत्पद्मं सितरक्तासितादिभिः ॥
सर्वर्तुकमलैः पुष्पैर्भूषयेत्सर्वतो दिशम् ।
वितानं दापयेन्मूर्ध्नि शुभं चित्रविचित्रितम् ॥
पार्श्वतः सितवस्त्रैस्तु सम्यक् शोभां प्रकल्पयेत् ।

1 हेमा. p. 414
2 *Ibid*, त्रैलोक्येऽपि न विद्यते
3 Udaipur Ms. reads wrongly: श्रीतालीपत्रकेशंच; correctd by हेमा. p. 524
4 A. S. B. and I. O., एवं विधिकृतेन वै

चन्द्रकैरर्द्धचन्द्रैश्च[1] दर्पणैश्चाऽमरैस्तथा ॥
घण्टाकिङ्किणिशब्दैश्च सर्वतश्चोपकल्पयेत् ।
तस्य मध्ये न्यसेद्यन्त्रं नागदन्तमयं शुभम् ॥
अधः किञ्चिन्निबद्धन्तु ऊर्ध्वतोऽपि सुसंयुतम् ।
शोभितं दृढबद्धेन बद्धं सूत्रेण बुद्धिमान् ॥
तस्योर्ध्वं विन्यसेद्विद्वान् पुस्तकं लिखितं शुभम् ।
आलेख्यमपि तत्रैव पूजयेद्विधिना ततः ॥
निरुदकैस्तथापुष्पैः कृमिकीटविवर्जितैः ।
चन्दनेन सदर्पेण भस्मना च विधूतये ॥

'सदर्पेण' मृगमदसहितेन ।

धूपश्च गुग्गुलुर्देयस्तुरुष्कागुरुमिश्रितः ।
दीपमाला तथा चाऽग्रे नैवेद्यं विविधं पुनः ॥
खाद्यं पेयं सितं लेह्यं चोष्यं च विनिवेदयेत् ।
पूजयेच्च दिशां पालान् लोकपालान् यथाक्रमम् ॥
कन्याः स्त्रियश्च सम्पूज्य मातरः कल्पयेच्च ताः ।
पुस्तकं देवदेवीं च विप्राणां दक्षिणास्तथा ॥
स्वशक्त्या चैव दातव्या नृपपौरांश्च पूजयेत् ।
तथा सम्पूजयेद्वत्स लेखकं शास्त्रपारगम्[2] ॥
छन्दोलक्षणतत्वज्ञं सत्कविं मधुरस्वरम् ।
प्रणष्टं यः स्मरेद्ग्रन्थं श्रेष्ठं पुस्तकलेखनात्[3] ॥

1 A. S. B. and Udaipur Ms., कन्दुकैः

2 I. O., पाठकम्

3 A. S. B., लेखने

नातिसन्ततविच्छिन्नैः नाऽश्लक्ष्णैश्चाऽप्यकर्कशैः ।
नन्दिनागरकैर्वर्णैर्लेखयेच्छिवपुस्तकम्[1] ॥
प्रारम्भे[2] पञ्च वै श्लोकान् पुनः शान्तिं तु कारयेत् ।
रात्रौ जागरणं कुर्यात्सर्वप्रेक्षां[3] प्रकल्पयेत् ॥
नटचारणनग्नैश्च देव्याः कथनसम्भवैः ।

'सर्वप्रेक्षां' सर्वप्रकारप्रेक्षणकम् ।

प्रत्यूषे पूजयेल्लोकान् ततः सर्वान् विसर्जयेत् ।
एकान्ते [4]सुमनस्केन विशुद्धेन दिने दिने ॥
निष्पाद्य विधिनाऽनेन स्वर्क्षे च शुभवासरे ।

'स्वर्क्षे' शुभनक्षत्रे ।

ततः पूर्वविधानेन पुनः पूजां प्रकल्पयेत् ॥
तथा विद्याविमानन्तु सप्त पञ्चविभूषितम्[5] ।
विचित्रवस्त्रशोभाढ्यं शुभलक्षणलक्षितम् ॥
कारयेत्सर्वतोभद्रं किङ्किणीरवकान्वितम् ।
दर्पणैरर्द्धचन्द्रैश्च घंटाचामरमण्डितम् ॥
तस्मिन् धूपं समुत्क्षिप्य सुगन्धं चन्दनागुरुम् ।
तुरुष्कं गुग्गुलं चैव शर्करामधुमिश्रितम् ॥

1 Note.

2 हेमा. p. 526, प्रारभ्य

3 I. O., सर्वप्रेक्षं

4 A. S. B., सुमनस्केन ; Udaipur Ms. has पुनः केन

5 हेमा. p. 526, सप्तपञ्चत्रिभूमिकम्

पूजयेत् पूर्ववत् सर्वान् कन्यास्त्रीद्विजदुःखितान् ।
तथा तत्पुस्तकं वत्स विन्यसेद्विधिपूर्वकम् ॥
एवं कृत्वा तथा विद्याः प्रीयन्तां मातरो मम ।
[ यस्यैव सक्तं तच्छास्त्रं तं पुस्तं परिकल्पयेत्[1] ॥

'यस्यैव सक्तं' यस्यैव देवस्य सक्तं सम्बन्धि । 'तत् पुस्तं' पुस्तकम् । 'तं' देवम् । 'परिकल्पयेत्' भावयेदित्यर्थः।

तस्मात्सर्वप्रयत्नेन विद्या देया सदा नरैः ।
तथा तपस्विनः पूज्याः सर्वशास्त्रार्थपारगाः ॥
शिवव्रतचरा मुख्याः विष्णुधर्मपरायणाः ।
देवीव्रतसमापुष्टा देवीभक्ता जनाश्च ये ॥
महता जनसङ्घेन रथस्थं दृढवाहनैः ।
युवभिश्चाऽपि तद्देयं[2] यस्य देवस्य चाऽऽगमः ॥
सामान्यं शिवतीर्थेषु मातॄणां भवनेषु च ।
तस्मिन् पूजां तथा कृत्वा देवदेवस्य शूलिनः ॥
समर्चयेत् प्रणम्येशं प्रीयन्तां मातरो मम ।
सदाध्ययनयुक्ताय विद्यादानरताय च ॥
विद्यासङ्ग्रहयुक्ताय कृतशास्त्रश्रमाय च ।
तेनैव वर्तते यस्तु तस्य तं विनिवेदयेत् ॥
जगद्धिताय वै शान्तिं सन्ध्यायां वाचयेत्तथा ।
तेन तोयेन दातारं मूर्ध्नि सम्यक् निषेचयेत् ॥

1 [ ] Lacuna in Udaipur Ms. supplied by I. O. and A. S. B.

2 हेमा. p. 527, चाऽभितो नेयं

शिवं वन्देत् ततः शब्दं उच्चार्य जपतस्तथा ।
एवंकृते महाशान्तिर्देशस्य नगरस्य च ॥

जायते नाऽत्र सन्देहः सर्वबाधाः शमन्ति च ।
अनेन विधिना यस्तु विद्यादानं प्रयच्छति ॥

स भवेत् सर्वलोकानां दर्शनादघनाशनः ।
मृतोऽपि गच्छति स्थानं ब्रह्मविष्णुनिषेवितम् ॥

सप्त पूर्वान् परानन्त्यान् आत्मनः सप्त एव च ।
उद्धृत्य पापसलिलात् विष्णुलोके महीयते ॥

यावन्ति पत्रसंस्थानि अक्षराणि भवन्ति च ।
तावत् स विष्णुलोकेषु क्रीडते विविधैः सुखैः ॥

ततः क्षितिं समायातो देव्यां भक्तिपरो भवेत् ।
समस्तभोगसम्पन्नो विदुषां जायते कुले ॥

विद्यादानप्रदानेन योगशास्त्रं वदेदिति ।
आत्मवित्तानुरूपेण यः प्रयच्छति मानवः ॥

असाध्यं फलमाप्नोति आढ्यतुल्यं न संशयः ।
स्त्री चैवाऽनेन विधिना विद्यादानफलं लभेत् ॥

भर्त्रा चैवाऽभ्यनुज्ञाता विधवा तमनुव्रजेत् ।
विद्यार्थिने सदा दद्यात् वस्त्रमभ्यङ्गभोजनम् ॥

छत्रिकामुदकं दीपं तस्मात्तेन विना न हि ।
लेखनीखटनं तीक्ष्णं मषीपात्रं च लेखनीम् ॥

दत्वा तु लभते वत्स विद्यादानमनुत्तमम् ।
पुस्तकास्तरणं दत्वा सुप्रमाणं सुशोभनम् ॥

विद्यादानमवाप्नोति तत्र रक्ष्यन्तु बुद्धिमान् ।

यन्त्रं रक्षासनं चैव दण्डासनमथाऽपि वा ॥

विद्यादानं सुशीलाय दत्तं भवति राज्यदम् ।
अञ्जनं नेत्रपादानां दत्तं विद्यापरायणे ॥

भूमिर्गृहं च क्षेत्रं च स्वर्गराज्यफलप्रदम् ।
यस्य भूभ्यां स्थितो नित्यं विद्यादानं प्रवर्तते ॥

तस्याऽपि भवति स्वर्गः तत्प्रसादात् नराधिप ] ।
इहैव कीर्तिमाप्नोति मृतो याति परां गतिम् ॥

यस्तु देव्या गृहे नित्यं विद्यादानं प्रवर्तते ।
स भवेत्सर्वलोकानां पूज्यः पूज्यपदं व्रजेत् ॥

महाभारते[1]

यो ब्रूयाच्चाऽपि शिष्याय धर्म्यां ब्राह्मीं सरस्वतीम् ।
पृथिवीगोप्रदानाभ्यां तुल्यं स फलमश्नुते ॥

'ब्राह्मी' वेदार्थानुगा ।

अधीत्यापि यो वेदान् न्यायविद्भ्यः प्रयच्छति ।
गुरुकर्मप्रशस्तोऽयं सोऽपि स्वर्गे महीयते ॥

नन्दिपुराणे[2]

शास्त्रे यस्माज्जगत्सर्वं संश्रितं च शुभाशुभम् ।
तस्माच्छास्त्रं प्रयत्नेन दातव्यं शुभकर्मणा ॥

विद्याश्चतुर्दश प्रोक्ताः क्रमेण तु यथास्थिति ।

1 Not specified by A. S. B ; cf. हेमा. pp. 499 ff.

2 cf. हेमा. pp. 495. ff.

षडङ्गा वेदाश्चत्वारो धर्मशास्त्रं पुरातनम् ॥
मीमांसा तर्कमपि च एता विद्याः प्रकीर्तिताः ।

'पुरातनं' पुराणम् ।

आसामेवान्तरोत्पन्नाः परा विद्याः सहस्रशः ।
आयुर्वेदः सस्यवेदो वर्गभेदः प्रकीर्तितः ॥

'सस्यवेदः' कृषिशास्त्रम् ।

सर्वोत्तरा चाऽऽत्मविद्या संसारभयनाशिनी ।
सर्वदुःखान्तकरणी सर्वपापविनाशनी ।
एता विद्याः समाख्याता बहुभेदोपभेदजाः ॥
कलाविद्यास्तथा चाऽन्याः शिल्पविद्यास्तथा पराः ।

'शिल्पविद्या' प्रतिमादिनिर्माणशास्त्रम्[1] ।

सर्वा एव महाभागाः सर्वाः सर्वार्थसाधिकाः ।
स्थिताश्च तारतम्येन विशिष्टफलसाधिकाः ॥
आत्मविद्या प्रधाना तु तथाऽऽयुर्वेदसंज्ञिता[2] ।
धर्माधर्मप्रणयिनीः कलाः शिल्पादिसाधिकाः ॥
सस्यविद्या च वितता एता विद्या महाफलाः ।
धर्माधर्मप्रणयिनी धर्माधर्मप्रसाधिका ॥
ययैको जीवति प्राणी कयाऽपि किल कुत्रचित् ।

1 Reproduced by हेमा. p. 496

2 हेमा. p. 496, संहिता

अप्रधानाऽपि सा विद्या कुलानां शतमुद्धरेत् ॥

'अप्रधाना' अवान्तरविद्या[1] ।

याऽपि साऽप्यवबोधत्वात् विद्या वै यत्र कुत्रचित् ।
प्रयास्यत्यक्षयांल्लोकान् विधिना वाऽविधानतः ॥

'अवबोधत्वात्' अवबोधहेतुत्वात् । 'प्रयास्यती'त्यन्तर्भावितो ण्यर्थः । तेन प्रापयिष्यतीत्यर्थः[2] ।

शिल्पविद्यां नरो दत्वा याति वै ब्रह्मणोऽन्तिकम् ।
कलाविद्यां नरो दत्वा वैष्णवं लोकमश्नुते ॥
कल्पमेकं न सन्देहः [3]स्वर्गभोगसमन्वितः ।
सस्यविद्यां नरो दत्वा तृप्तिमान् कामसंयुतः ॥
प्रजापतिपुरं गच्छेन्नरकात्तारयेत् पितॄन् ।
आयुर्वेदं नरो दत्वा लोकानाप्नोति निर्मलान् ॥
आयुर्लोके[4] दिव्यकामान् दिव्यं मन्वन्तरं नरः ।
तर्कविद्यां नरो दत्वा वारुणं लोकमाप्नुयात् ॥
मीमांसां तु बुधे दत्वा शास्त्रमिन्द्रपुरे[5] वसेत् ।
धर्मशास्त्रं नरो दत्वा स्वर्गलोके महीयते ॥
दश मन्वन्तरान् मर्त्यः तारयेन्नरकात् पितॄन् ।
वेदविद्यां नरो दत्वा स्वर्गे कल्पत्रयं वसेत् ॥

1 Reproduced by हेमा. p. 496

2 *Ibid,*

3 A. S. B., स्वर्गभोग्य

4 A. S. B. and हेमा. p. 497, अश्विनोर्दिव्यकामायान्

5 हेमा. p. 497, इन्दुपुरे

आत्मविद्यां नरो दद्यात्तस्य संख्या न विद्यते ।
पुण्यस्य गदितुं सम्यगपि वर्षशतायुतैः ॥

एतावच्छक्यते वक्तुं यत् कल्पायुतमुत्तमम् ।
सत्यलोके वसेन्मर्त्यो यत्र ब्रह्मा वसेत्प्रभुः ॥

अप्येकं नीरुजीकृत्य जन्तुं यादृशतादृशम् ।
आयुर्वेदप्रभावेण किं न दत्तं भवेद् भुवि ॥

सस्यवेदप्रदानेन सम्पन्नाः सस्यशालयः ।
किं नाम न कृतं तत्र पुण्यं भवति शाश्वतम् ॥

मीमांसाशास्त्रमाहात्म्याद् बुध्वा वै वेदनिर्णयम् ।
किं न नाम शुभं दातुर्यज्ञकर्मप्रवर्त्तनात् ॥

आत्मविद्या च पौराणी धर्मशास्त्रात्मिका च या ।
एता विद्यास्त्रयो मुख्याः सर्वदानक्रियाफलैः ॥

धर्मशास्त्रं नरो बुध्वा यत्किञ्चिद्धर्ममाश्रयेत् ।
तस्य धर्मं शतगुणं धर्मशास्त्रप्रदस्य च ॥

पुराणाख्यानविद्वांसः पितृदेवार्चने रताः ।
लोकान् सर्वान् कामपूर्णान् यान्ति सर्वशुभोदयान् ॥

पुराणविद्यादातारस्त्वनन्तफलभागिनः ।
आत्मविद्याप्रदातारो नरा भाग्यसमाश्रयाः ॥

न पुनर्योनिनिरयं प्रविशन्ति दुरत्ययम् ।
उत्तीर्णाः सर्वपापेभ्यः स पुत्रपशुबान्धवाः ॥
मुच्यन्ते निरयैर्घोरैरसंख्यैर्यातनात्मकैः ।

तथा

श्लोकं प्रहेलिकां गाथामथाऽन्यद्वा सुभाषितम् ।

दत्वा प्रीतिकरं याति लोकमप्सरसां शुभम् ॥

तथा[1]

यदेतत् पुण्यमाख्यातं विद्यादानस्य साम्प्रतम् ।
देशकालविधिश्रद्धापात्रयोगात्तथा बुधः ॥
प्राप्नोति कोटिगुणितं फलं विद्याप्रदानतः ।
यस्तु पुण्यप्रदो मर्त्यो जिगीषुः कीर्तिसाधकः[2] ॥
स विधानेन वै दद्याद्विद्यां विविधकामदाम् ।
एवं विद्याप्रदानं वै सर्वकामगुणान्वितम् ॥
यतेत काले पात्रे च रहस्यं चैतदुत्तमम् ।
उद्दिश्य देवतां दत्तं प्रदानं यत्र कुत्रचित् ॥
तस्याऽसमाप्तपुण्यस्य केन पुण्यं निरुध्यते ।
गुरुमाराध्य यत्नेन विद्याव्याख्यानपारगम् ॥
शक्त्या भक्त्या प्रणामेन धनैः सर्वगणैस्तथा[3] ।

[ 'गुरुमाराध्य'विद्या दातव्येति तात्पर्यार्थः[4] ।

यथा घटप्रतिच्छन्ना रत्नराजमहाप्रभाः ॥
अकिञ्चित्करतां प्राप्तास्तद्वद्विद्याश्चतुर्दश ।
विना तु गुरुणा सम्यक् बोधकेन विपश्चिता ॥
नैव विद्याफलप्राप्तिः गुरुं तस्मात्प्रसाधयेत् ।
सुधांशोर्भूषणैर्नित्यं यथा देवं पिनाकिनम् ॥

1 हेमा. p. 528

2 I. O., कीर्तिमांस्तु यः

3 हेमा. p. 528, विद्यादानं समारभेत्

4 [ ] omitted by हेमा. p. 528

यो गुरून् पूजयेन्नित्यं स्थितं वा प्रस्थितं च वा ।
तत्प्रसादेन वै यस्मात् प्राप्नुते सर्वसम्पदः ॥
तस्माद्गुरुं प्रयत्नेन महादेववदर्चयेत् ।
भक्त्या प्रीत्या प्रयत्नेन श्रद्धया च सदैव तु ॥
एष माता पिता ह्येष एष बन्धुश्च बान्धवः ।
एष चिन्तामणिः स्फीतः एष एव च मे सुहृत् ॥
एवं श्रद्धापरो नित्यः गुरुमाराधयेद्बुधः ।
अज्ञानदुःखशमनं नरकोद्धरणं तथा ॥
कुतो माता पिता वाऽपि बान्धवो वा महागुणः ।
तादृगभ्युदयं कुर्याद्यत् कुर्याच्च गुरुर्महत् ॥
कोऽन्यो ह्यज्ञानदुःखौघादुद्धरेद्भवबन्धनात् ।
सम्यक् शास्त्रार्थबोद्धारं महादेववदर्चयेत् ॥
वस्तुमात्रेण यो ज्ञानं शास्त्ररूपमुपन्यसेत् ।
स तावच्छिववत्पूज्यो भक्त्या भवभयापहः ॥
यस्तु शास्त्रविवक्षार्थं विशेषार्थं प्रबोधयेत् ।
पदवाक्यार्थबोधेन सम्यक्शास्त्रप्रवर्त्तनम् ॥

'शास्त्रविवक्षार्थः' शास्त्रतात्पर्यविषयः ।

पूर्वोत्तरार्थसङ्गत्या समुदायार्थनिश्चयैः ।
सुशास्त्राभिमता वाचः सम्यग्यो वेत्ति तत्वतः ॥
स तु साक्षान्महाबुद्धिः शङ्करो भगवानिह ।
तं भजेत्सर्वभावेन भक्तियोगेन सर्वदा ॥
आदित्येन विना यद्वज्जगदन्धं विभाव्यते ।
गुरुवाक्यैर्विना सर्वं तथैव हि तमोमयम् ॥

तस्माद्यथा महादेवं तद्वदेव गुरुं सदा ।
यः पश्यति स पुरुषः सर्वधर्मानवाप्नुयात् ॥ ]
विद्या च मुख्यं दानानां गुरुं तस्य विधिं बुधः ।
श्रद्धा विधेया[1] विधिवच्छ्रद्धया भावितात्मना ॥
सगोत्रेभ्यस्तु[2] तां दद्याद्विशेषाद्गुणशालिषु ।
उपयोग्यन्तु यद्यस्य तत्तस्य प्रतिपादयेत् ॥
सुरालयेषु सिद्धेषु यथा विभवविस्तरैः ।
दातव्यास्तु प्रयत्नेन महापुण्यफलार्थीभिः ॥
शुभे नक्षत्रदिवसे शुभे चाऽपि दिनग्रहे ।
लेखयेत्पूज्य देवेशान् रुद्रब्रह्मजनार्दनान् ॥
पूर्वदिग्वदनो भूत्वा लिपिज्ञो लेखकोत्तमः ।
निरोधो हस्तबाह्वोश्च मषीपात्रावधारणा[3] ॥
एकान्तस्योपकरणं यस्याऽसौ लेखकोत्तमः ।
विद्याधारं प्रकुर्वीत हेमरत्नमयं शुभम् ॥
नागदन्तमयं वाऽपि शुभदारुमयं तथा ।
मनोज्ञमगुरुं रम्यं श्लक्ष्णचूर्णप्रयोगजम् ॥
सत्काचवस्त्रसंयुक्तं [4]विकासेन समन्वितम् ।

'नागदन्तमयं' हस्तिदन्तनिर्मितम् ।

तत्र विद्यां विनिहितां कुर्यात्पुस्तकसंस्थिताम् ॥

1 हेमा. p. 528, श्रुत्वा विद्यां च विधिवत्
2 *Ibid*, सत्पात्रेभ्यः
3 *Ibid*, निरोधिहस्तबाहुश्च मषीपात्रावधारणात्
4 *Ibid*, सङ्कोचपत्रसंयुक्तम्

कुर्याच्च पुस्तकं तस्य लिखेदङ्गुलविस्तृतम् ।
सूक्ष्माक्षरं च रम्यं च कृष्णमेचकितं तु वा ॥
अथवा रक्तपद्माभं मेचकालङ्कृतं शुभम् ।
कार्पाससूत्रीग्रथितं नानागन्धाधिवासितम् ॥

'मेचकालङ्कृतं' मयूरार्द्धचन्द्रालङ्कृतम् ।

मषीभिश्चाऽप्यनेकाभिश्चारुवर्णाभिरेव च ।
दृढस्तम्भनयुक्ताभिर्मेचकैश्चाऽप्यनेकशः ॥

'स्तम्भनं' मषीस्थैर्यहेतुः ।

लेखनीभिश्च दिव्याभिर्हैमचित्राभिरेव च ।
बहिश्च वर्णं कुर्वीत पुस्तकस्य मनोरमम् ॥
पीतरक्तकषायैर्वा सुनिबद्धं सुचित्रितम् ।
रम्यं लघु सुविस्तीर्णं [1]निःश्रान्तग्रन्थिसंयुतम् ॥
विद्याधारं ततो यन्त्रस्थापितं पूर्वपुस्तकम् ।

'पूर्वपुस्तकं' आदर्शपुस्तकम् ।

गृहे मनोरमे गुप्ते सुधालेपितभित्तिके ॥
नानारागाङ्कतोपेते सुरबिम्बमनोरमे[2] ।
धूपामोदमनोज्ञे च वितानकपरिष्कृते ॥
लेखको बुद्धिमान् स्नातः शुक्लपुष्पाम्बरोज्वलः ।
सुवर्णमुक्ताकेयूरो मुद्रिकाशोभिताङ्गुलिः ॥

1 हेमा. p. 529, निर्ग्रन्थि

2 *Ibid*, नानारागाङ्करोपेते शुद्धबिम्बमनोरमे

सुसमिद्धे मषीभाण्डे लेखनीशास्त्रसंयुते ।
प्रारभेत्तूर्यघोषेण पूज्य देवान् पितॄंस्तथा ॥
ब्राह्मणान् स्वस्ति वाच्याऽऽदौ [1]शास्त्रं सञ्चारयेद्बुधः ।
श्लोकपञ्चकमादौ तु दशकं वाऽपि लेखयेत् ॥
ततो नक्षत्रयोगेन द्वितीयेऽहनि तल्लिखेत् ।
तादृशेनैव विधिना पुण्याहैः शुभसंयुतैः ॥
ततः समाप्ते शास्त्रे तु पुनः[2] पुण्याहसंयुतम् ।
कुर्याच्च तदहोरात्रे पानभोजनवस्तुभिः ॥
उभयं वाऽपि तल्लेख्यं समीकुर्याच्च वाचयेत्[3] ।
ऊनाधिकैश्च संयुक्तं वर्णैर्मात्रादिभिस्तथा ॥
अनुस्वारविसर्गैश्च युक्तायुक्तैर्विचारयेत् ।
शास्त्रस्य च क्रियायुक्त्या पुनरुक्त्या च शोधयेत् ॥
ऊनार्थोक्त्याऽप्रसङ्गस्य शब्दयोग्यतया तथा ।
सूत्रान्तरानुरोधेन[4] प्रश्नोत्तरविशेषतः ॥
असूत्रत्वाच्च शास्त्रस्य समुदायार्थबोधतः[5] ।
प्रक्रान्तसूचनोद्देशैर्गदितश्चोदितैरपि ॥
बह्वर्थानां च शब्दानां योग्यासत्तिं परीक्ष्य तु ।

1 *Ibid*, शास्त्रं च श्रावयेत्

2 I. O., गुरुः for पुनः

3 हेमा. p. 530, वाचकम्

4 हेमा. p. 530, सूत्रान्तरार्थबोधेन

5 A. S. B. and हेमा. p. 530, असूत्रत्वाच्च शास्त्रस्य समुदायार्थ बोधतः; Udaipur Ms., has सूत्रत्वायशास्त्रस्य समुदायोऽनुरोधतः

सर्वशास्त्रानुरोधेन कारणाद्यैरविप्लुतैः[1] ॥
क्वचिच्छब्दविवक्षैश्च प्रकृतार्थं निरूपयेत् ।
छन्दसां वाऽपि बुध्येत वृत्तसंयोगमीप्सितम् ॥
एवं विद्यान्तु मेधावी शास्त्रं सत्कृत्य कृत्स्नशः ।
प्रदद्याद्द्विभवैर्दिव्यैः सुरायतनवेश्मसु ॥
व्यक्तदेशलिपिन्यासं मुख्यं नागरमुच्यते ।

'व्यक्तदेशलिपिन्यासं' व्यक्ता तद्देशानुसारिणी लिपिर्यत्र न्यासेऽक्षरनिर्माणे स तथा ।

आरोप्य याने रत्नाढ्ये शुभवस्त्रपरिष्कृते ॥
घण्टाचामरशोभाढ्यं रत्नदण्डातपत्रिणि ।
गजवाजिरथच्छायामहाशोभासमन्वितम् ॥
नृत्यगीतनिनादेन नानावाद्यरवेण च ।
मङ्गलैर्वेदघोषैश्च देवाय विनिवेदयेत् ॥
नानापुष्पोपहारैश्च सम्पूज्य तु दिवौकसः ।
दत्वा च पुस्तकं तत्र पितॄणां धर्ममुद्दिशेत् ॥
बान्धवानां च हृद्यानां अनन्तं फलमश्नुते ।
ततो दत्वा विधानेन तां विद्यां शिवमन्दिरे ॥
ततश्च भोजयेद्विप्रान् रुद्रभक्तांश्च मानवान् ।
यथाशक्ति च कर्तव्या उत्सवाः स्वेषु वेश्मसु ।
राज्ञा तु नगरे कार्यो ग्रामे ग्रामाधिपैस्तथा ।
गृहे गृहस्थैः कर्तव्यः उत्सवो बन्धुभिः सह ॥

1 A. S. B., अविप्लुतैः; Udaipur Ms. reads wrongly अविष्णुतैः

स्नातैः शुक्लैः समालब्धैः सुखिभिः[1] सुसमाहितैः ।
प्रीतियुक्तैस्ततः श्राव्यं शास्त्रं श्रद्धासमन्वितैः ॥
वाचकं भोजयेत्तत्र यथाविभवविस्तृतः ।
गुरुं च भक्त्या मतिमान्यथाशक्ति ह्यमायया[2] ॥
ततः पुष्पैश्च धूपैश्च श्रावकान् सम्प्रपूजयेत् ।
वाचको ब्राह्मणः प्राज्ञः श्रुतशास्त्रो महामनाः ॥
अभ्यस्ताक्षरविन्यासो वृत्तशास्त्रविशारदः ।
शब्दार्थवित्प्रगल्भश्च विनीतो मेधया युतः ॥
गीतज्ञो वाक्पटुः श्रव्यस्वरोऽनाविलभाषकः ।
गुरुश्च धर्मवान् प्राज्ञः श्रुतशास्त्रो विमत्सरः ॥
विप्रः प्रकृतिसंशुद्धः शुचिः स्मितमुखः सदा ।
सुवृत्तो वृत्तशास्त्रज्ञः सर्वशास्त्रविशारदः ॥
अभ्यस्तशास्त्रसन्दोहः प्रकृतार्थप्रवर्तकः ।

'वृत्तशास्त्रज्ञः' छन्दःशास्त्रवित् । 'प्रकृतार्थप्रवर्तकः' प्रस्तुतार्थभिधायी[3] ।

नाऽप्रक्रमकृतव्याख्यपौर्वापर्यनिविष्टधीः ॥
अध्यायसर्गविच्छेदविभक्त्यर्थप्रयोजकः[4] ।
शास्त्रार्थपदविद्धीमान् पदश्लोकार्थबोधकः ॥
समुदायप्रकीर्णार्थमुखशाखासु सङ्गतः ।

1 हेमा. p. 531, सग्विभिः

2 Udaipur Ms. corrupt: restored from हेमा. p. 531

3 हेमा. p. 532, repeats this comment.

4 A. S. B., विभक्त्यर्थप्रयोजकः; Udaipur Ms. has विच्छेदरिक्तार्थ प्रयोजकः

अलङ्कारश्च[1] हृद्यस्तु व्यपदिश्याऽर्थबोधकः ॥
प्रक्रान्तादिषु शास्त्रार्थविभागपरिनिष्ठितः ।
कष्टाभिधानगूढार्थभङ्गेन तु विरोधकः ॥
श्रद्धेयवागनालस्यः श्रोतृचित्तावबोधकः ।
संस्कारैः संस्कृतां विद्यां प्राकृतैः प्राकृतामपि ॥
आलापमात्रैर्व्याख्यानैर्यश्च शिष्यान् प्रबोधयेत् ।
देशाभिधानविन्यासैर्बोधयेच्चाऽपि यो गुरुः ॥
स गुरुस्स पिता माता स च चिन्तामणिस्स्मृतः ।
शास्त्रोपायविधानेन नरकेभ्यः समुद्धरेत् ॥
कस्तेन सदृशो लोके बान्धवो भुवि विद्यते ।
यस्य वाग्रश्मिबृन्देन[2] हृदयान्नश्यते तमः ॥
महासंसारजननं भवेत् सोऽर्को महाद्युतिः ।
नोद्विजेत्तस्य पारुष्ये न च वैलोम्यमिच्छतः[3] ॥
न चाऽस्य व्याधिदुःखेषु म्लानां चाऽप्रियो भवेत् ।
प्रसादयेच्च कुपितं दुःखमग्नं समुद्धरेत् ॥
रोगेभ्यश्चाऽपि यत्नेन परित्राणेन चोद्धरेत् ।
एवं व्याख्यां शुभां श्रुत्वा गुरुवक्त्रान्नरोत्तमः ॥
विधेयं चिन्तयेद्यत्नात् परत्र हितकारणात् ।
शृणुयाच्छ्रद्धया युक्तः प्रणतोऽभिमुखो गुरोः ॥
अनन्यसत्कथाक्षेपी निष्प्रमादो ह्यतन्द्रितः ।

1 A. S. B., अनक्षरश्च

2 A. S. B., यस्य वाग्रश्मिबृन्देन; Udaipur Ms. reads wrongly यस्य वाग्रुक्मिवृन्देन

3 हेमा. p. 532, न च वैलोम्यमावहेत्

गुरुं च संशये जाते पृच्छेद्वाक्यमुदीरयेत् ॥
गुरुणा चोक्तमेकान्ते श्रद्धावान् वाक्यमाश्रयेत् ।
न पुरो गुरुवाक्यानि गुरूक्तं परिपालयेत् ॥
भिषजां वचनं कार्यं गुरूणां च महात्मनाम् ।
न तत्कृतं स्वयं कुर्यात्ते समृद्धानलत्विषः ॥

'तत्कृतं' गुरुचेष्टितम् ।

अप्रस्तुतकथाक्षेपं यः कुर्यादग्रतो गुरोः ।
स ब्रह्महत्यामाप्नोति गुरुवाक्येष्वनिश्चयः[1] ॥

'गुरुवाक्येषु अनिश्चयः' गुरुवाक्येषु संशयवान्[2] ।

यश्च श्रुत्वाऽन्यतः शास्त्रं संस्कारं प्राप्य वाशुभम् ।
अन्यस्य जनयेत्कीर्तिं स गुरोर्ब्रह्महा भवेत् ॥
विस्मारयेच्च वा मोहाद्योऽपि शास्त्रार्थमुत्तमम् ।
स याति नरकं घोरमक्षयं भीमदर्शनम् ॥
यस्तु बुद्ध्वा नरः शास्त्रं किञ्चित् कुर्याच्छुभाशुभम् ।
भवेच्छतगुणं तद्वै [3]ज्ञानं नित्यं रतस्य च ॥
एवं विधानतो वाच्यं वाचकेन विपश्चिता ।
तपस्समात्मकं सर्वं स्वर्गादिफलसाधनम् ॥
शनैर्विबोध्य वै वाच्यमध्यात्मादि च यद्भवेत् ।

1 A. S. B., गुरुवाक्येषु अनिश्चयः; Udaipur Ms. has गुरुवाक्येष्वसंशयात्

2 A. S. B.

3 A. S. B. and हेमा. p. 533, विज्ञानेभ्यो रतस्य च

क्रुद्धोक्तियुद्धसंक्षोभं धारावर्त्तेन वाचयेत् ॥

'धारावर्त्तेन' वेगेन ।

सरागं ललितैर्वाक्यैर्वाचयेद्वृद्धसङ्गमे ।
नानावृत्तान्तरूपेण लालित्येन च वाचयेत् ॥
सर्गाध्यायसमाप्तौ च कथापर्यन्त एव वा ।
प्रशस्तशब्दसङ्गैश्च कुर्यादिति विरामणम् ॥
समाप्ते वाचनेऽभीष्टं ब्रूयादेवं विचक्षणः ।
'अवधार्य जगच्छान्तिमन्ते शान्त्युदकं सृजेत् ॥
सुश्रुतं सुश्रुतं ब्रूयादस्तु वाऽऽख्यातमित्यदः ।
लोकः प्रवर्त्ततां धर्मे राजा चाऽस्तु सदा जयी ॥
धर्मवान् धर्मसम्पन्नो गुरुश्चाऽस्तु निरामयः' ।
इति प्रोच्य यथायातं गन्तव्यं च विभाषितैः[1] ॥
शिष्यैः परस्परं शास्त्रं चिन्तनीयं विचक्षणैः ।
कथावस्तुप्रसङ्गेन नानाव्याख्यानभावनैः ॥
युक्तिभिश्च[2] स्मरेद्व्याख्यां चिह्नैश्चाऽपि स्वयं कृतैः ।
एवं दिने दिने व्याख्यां श्रृणुयान्नियतो नरः ॥

समग्रशास्त्रश्रवणेन पुंसः
श्रद्धाप्रधानं भवतीह चेतः ।
रागं च शास्त्रात्मकमभ्युपैति
दोषाश्च नाशं निखिलाश्च यान्ति ॥

1 A. S. B., विभाषितैः; Udaipur Ms. reads विभावतैः

2 A. S. B., युक्तिभिश्च; Udaipur Ms. has, मूर्तिभिश्च

कथां न काञ्चिच्छृणुयान्न[1] शास्त्रं
अश्रद्धया वोज्झितधर्मसङ्गः ।
ततः समाप्तावथ शास्त्रसङ्गे
कथोदये चाऽपि विनीतबुद्धिः ॥
शक्त्याऽर्चयेद्वाचकमग्र्यमेव
गुरुं च भक्त्या पितृवन्निकामम्[2] ।

एष विद्याप्रदानस्य प्रधानो विधिरुच्यते ।
अनेनैव विधानेन ब्राह्मणे शीलशालिने ॥
प्रबोधयति धीयुक्ते युक्तिज्ञे वेदवादिनि ।
विन्यसेत्तु शुभं शास्त्रं महापुण्यजिगीषया ॥
धनैर्वा [3]विपुलैर्दक्षैर्गुरुं कृत्वा सुतर्पितम् ।
अध्यापयेच्छुभान् शिष्यानभिजातान् सुमेधसः ॥
एवं विद्याप्रदानं तु सर्वदानोत्तमं मतम् ।
सर्वदा सर्ववर्णानां नरकप्लवमुत्तमम् ॥
अनेन विधिना दत्त्वा विद्यां पुण्यपरो नरः ।
यत्फलं त्वश्वमेधानां शतस्य सुकृतस्य च ॥
राजसूयसहस्रस्य सम्यगिष्टस्य यत्फलम् ।
तत्फलं लभते मर्त्यो विद्यादानेन भाग्यवान् ॥
सर्वसस्यसुसम्पूर्णां सर्वरत्नोपशोभिताम् ।
ब्राह्मणेभ्यो महीं दत्वा ग्रहणे चन्द्रसूर्ययोः ॥

1 हेमा. p.534, यथाकथञ्चित् शृणुयात्
2 A. S. B. पितृवन्निकामं; Udaipur Ms. reads पितृरात्रिकामम्
3 Udaipur Ms. reads विधनैः

यत्फलं लभते मर्त्यो विद्यादानेन तत्फलम् ।
यावदक्षरसंस्थानं विद्यते शास्त्रसंश्रये ॥
तावद्वर्षसहस्राणि स्वर्गे विद्याप्रदो भवेत् ।
यावत्यः पङ्क्तयस्तत्र पुस्तकेऽक्षरसंश्रिताः ॥
तावतो नरकात् कुल्यानुद्धृत्य नयते दिवम् ।
यावच्च पत्रसंख्यानं विद्यते पुस्तके शुभे ॥
तावद्युगसहस्राणि [1]स्वर्गलोके स मोदते ।
यावच्च पातकं तेन कृतं जन्मशतैरपि ॥
तत्सर्वं नश्यते तस्य विद्यादानेन देहिनः[2] ।
स याति[3] मनुजो लोके स धन्यः स च कीर्तिमान् ॥
यो विद्यादानसम्पर्कप्रसक्तः पुरुषोत्तमः ।
यथाविभवतो दद्याद्विद्यां शाठ्यविवर्जितः ॥
याति पुण्यमयान् लोकानक्षयान् भोगभूषितान् ।
येऽपि यत्र मषीपात्रे लेखनीसम्पुटादिकम् ॥
दद्युः शास्त्राभियुक्ताय तेऽपि विद्याप्रदायिनाम्[4] ।
यान्ति लोकान् शुभान् मर्त्याः पुण्यभाजो महाधियः ॥
इति विद्याप्रदानस्य माहात्म्यं परिकीर्तितम् ।
श्रुत्वैतत्पातकैर्मुच्येन्नियतं जन्मजन्मजैः[5] ॥

1 A. S. B. and I. O., सकुलो मोदते दिवि

2 I. O., देहिनाम्

3 A. S. B., स जातो

4 I. O. and A. S. B.

5 A. S. B. and I. O. सप्तजन्मजैः

मत्स्यपुराणे[1]

पुराणं सर्वशास्त्राणां ब्रह्मणा प्रथमं स्मृतम् ।
अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ॥
पुराणमेकमेवाऽऽसीत्तस्मिन् कल्पान्तरेऽनघ ।
त्रिवर्गसाधनं पुण्यं शतकोटिसुविस्तरम् ॥

तथा

तदर्थोऽत्र चतुर्लक्षं संक्षेपेण प्रकीर्तितः[2] ।
पुराणानि दशाष्टौ च साम्प्रतं तदिहोच्यते[3] ॥
नामतस्तानि वक्ष्यामि शृणुध्वमृषिसत्तमाः ।
ब्रह्मणाऽभिहितं पूर्वं यावन्मात्रं मरीचये ॥
ब्राह्मं दशसहस्रं तु पुराणं परिकीर्त्यते ।
लिखित्वा तच्च यो दद्याज्जलधेनुसमन्वितम् ॥
वैशाखपौर्णमस्यां स ब्रह्मलोके महीयते ।
एतदेव महापद्ममभूद्धैरण्मयं जगत् ॥
तत्कथान्ताश्रयं तद्वत् पाद्ममित्युच्यते बुधैः ।
पाद्मं तत्पञ्चपञ्चाशत् साहस्राणीह पठ्यते ॥
तत्पुराणं च यो दद्यात्सुवर्णकमलान्वितम् ।
ज्येष्ठे मासि तिलैर्युक्तं सोऽश्वमेधफलं लभेत् ॥
वराहकल्पवृत्तान्तमधिकृत्य पराशरः ।

1 हेमा. p. 511
2 *Ibid*, p. 511
3 *Ibid*, p. 515-6

यान् प्राह[1] धर्मानखिलान् [2]तदुक्तं वैष्णवं विदुः ॥
तदाषाढे तु यो दद्यात् घृतधेनुसमन्वितम् ।
पौर्णमास्यां विपूतात्मा स पदं याति वारुणम् ॥
त्रयोविंशतिसाहस्रं तत्पुराणं विदुर्बुधाः ।
श्वेतकल्पप्रसङ्गेन धर्मान् वायुरिहाऽब्रवीत् ॥
यत्रैतद्वायवीयं स्याद्रुद्रमाहात्म्यसंयुतम् ।
चतुर्विंशतिसाहस्रं पुराणं तदिहोच्यते ॥
श्रावण्यां श्रावणे मासि गुडधेनुसमन्वितम् ।
यो दद्याद्विधिसंयुक्तं ब्राह्मणाय कुटुम्बिने ॥
शिवलोके स पूतात्मा कल्पमेकं वसेन्नरः ।
यत्राऽधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः ॥
वृत्रासुरवधोपेतं तद्भागवतमुच्यते[3] ।
लिखित्वा तच्च यो दद्याद्धेमसिंहसमन्वितम् ॥
पौर्णमास्यां प्रौष्ठपद्यां स याति परमं पदम् ।
अष्टादशसहस्राणि पुराणं तत्प्रकीर्तितम्[4] ॥
यत्राऽऽह नारदो धर्मान् बृहत्कल्पाश्रयांस्त्विह ।
पञ्चविंशतिसाहस्रं नारदीयं तदुच्यते ॥
तदिषे पञ्चदश्यां तु यो दद्याद्धेनुसंयुतम्[5] ।

1 हेमा. p. 576, यत्राह
2 I. O., वैष्णवं परमं विदुः
3 हेमा. p. 516
4 *Ibid*, p. 517
5 *Ibid*, हेमसंयुतम्

परमां[1] सिद्धिमाप्नोति पुनरावृत्तिदुर्लभाम् ॥

'इषे' आश्विने ।

यत्राऽधिकृत्य शकुनीन् धर्माधर्मविचारणम् ।
पुराणं नवसाहस्रं मार्कण्डेयमिहोच्यते ॥
परिलेख्य तु यो दद्यात्सौवर्णकरिसंयुतम् ।
कार्तिक्यां पौण्डरीकस्य यज्ञस्य फलभाग्भवेत् ॥
यत्तदीशानकल्पस्य वृत्तान्तमधिकृत्य च ।
वसिष्ठायाऽग्निना प्रोक्तमाग्नेयं तत् प्रचक्षते ॥
लेखयित्वा तु यो दद्याद्धेमपद्मसमन्वितम् ।
मार्गशीर्षे विधानेन तिलधेनुयुतं तथा ॥
तच्च षोडशसाहस्रं सर्वक्रतुफलप्रदम् ।
यत्राऽधिकृत्य माहात्म्यमादित्यस्य चतुर्मुखः ॥
अघोरकल्पवृत्तान्तप्रसङ्गेन जगत्स्थितः[2] ।
मनवे कथयामास भूतग्रामस्य लक्षणम् ॥
चतुर्दशसहस्राणि तथा पञ्चशतानि च ।
भविष्यचरितप्रायं भविष्यं तदिहोच्यते[3] ॥
तत्पौषे मासि यो दद्यात्पौर्णमास्यां विशेषतः ।
गुडकुम्भसमायुक्तमग्निष्टोमफलं लभेत् ॥
रथन्तरस्य कल्पस्य वृत्तान्तमधिकृत्य च ।
सावर्णिर्नारदायाऽऽह कृष्णमाहात्म्यमुत्तमम् ॥

1 *Ibid*, p. 517, उत्तमां for परमां

2 हेमा. p. 517, जगत्पतिः for जगत्स्थितः

3 Udaipur Ms., आदित्यचरितं बहु

यत्र ब्रह्मवराहस्य चरितं वर्ण्यते बहु[1] ।
तदष्टादशसाहस्रं ब्रह्मवैवर्त्तमुच्यते ॥
पुराणं ब्रह्मवैवर्त्तं यो दद्यान्माघमासि च ।
पौर्णमास्यां सभवनं ब्रह्मलोके महीयते ॥

'भवनं' गृहम् ।

यत्राऽग्निलिङ्गमध्यस्थः प्राह [2]देवो महेश्वरः ।
धर्मार्थकाममोक्षार्थमाग्नेयमधिकृत्य च ॥
कल्पितं लैङ्गमित्युक्तं पुराणं ब्रह्मणा स्वयम् ।
तदेकादशसाहस्रं फाल्गुन्यां यः प्रयच्छति ॥
तिलकुम्भसमायुक्तं[3] स याति शिवसात्मताम् ।
महावराहस्य पुनर्माहात्म्यमधिकृत्य च ॥
विष्णुनाऽभिहितं क्षोण्यै तद्वाराहमिहोच्यते ।
मानसस्य[4] प्रसङ्गेन कल्पस्य मुनिसत्तमाः ॥
चतुर्विंशत्सहस्राणि तत्पुराणमिहोच्यते ।
काञ्चनं गरुडं कृत्वा तिलधेनुसमन्वितम् ॥
पौर्णमास्यां च यो दद्याद्ब्राह्मणाय कुटुम्बिने ।
वाराहस्य प्रदानेन पदमाप्नोति वैष्णवम् ॥
यत्र माहेश्वरं धर्ममधिकृत्य च षण्मुखः ।
कल्पे तत्पुरुषे वृत्ते चरितैरुपशोभितम् ॥

1 I. O.

2 हेमा. p. 518, देवीं for देवः

3 I. O., तिलधेनुसमायुक्तम्

4 हेमा. p. 518, मानवस्य for मानसस्य

'तत्पुरुषे' पुरुषकल्पे ।

स्कान्दं नाम पुराणं तदेकाशीतिर्निगद्यते ।
सहस्राणि शतं चैकमिति यत्नेन पठ्यते ॥
परिलेख्य च यो दद्याद्धेमशूलसमन्वितम् ।
शैवं पदमवाप्नोति मीने चोपगते रवौ[1] ॥
त्रिविक्रमस्य माहात्म्यमधिकृत्य च षण्मुखः[2] ।
त्रिवर्गमभ्यधात्तत्र वामनं परिकीर्त्त्यते ॥
पुराणं दशसाहस्रं ख्यातं कल्पानुगं शिवम् ।
यः शरद्विषुवे दद्याद्वैष्णवं यात्यसौ पदम् ॥
यत्र धर्मार्थकामानां मोक्षस्य च रसातले ।
माहात्म्यं कथयामास कूर्मरूपी जनार्दनः ॥
इन्द्रद्युम्नप्रसङ्गेन ऋषीणां शक्रसन्निधौ ।
सप्तदश सहस्राणि लक्ष्मीकल्पानुषङ्गिकम् ॥
यो दद्यादयने कौर्मं हेमकूटसमन्वितम्[3] ।
गोसहस्रप्रदानस्य स फलं प्राप्नुयान्नरः ॥
श्रुतीनां यत्र कल्पादौ प्रवृत्त्यर्थं जनार्दनः ।
मत्स्यरूपी च मनवे नरसिंहोपवर्णनम् ॥
अधिकृत्याऽब्रवीत् सप्तकल्पवृत्तमुनिव्रतम् ।
तन्माहात्म्यमिति जानीध्वं सहस्राणि त्रयोदश ॥
विषुवे हेममत्स्येन धेन्वा चैव समन्वितम् ।

1 हेमा. p. 518, मकरोपगमे रवेः
2 *Ibid*, चतुर्मुखः for षण्मुखः
3 A. S. B. and I. O., हेमकूर्मं

यो दद्यात्तेन पृथिवी दत्ता भवति चाऽमुना ॥

यदा च गारुडे कल्पे विश्वाण्डे गरुडोऽभवत् ।
अधिकृत्याऽब्रवीत् कृष्णो गारुडं तदिहोच्यते ॥

तदष्टादश चैकं च सहस्राणीह पठ्यते ।
सौवर्णहंससंयुक्तं यो ददाति पुमानिह ॥

संसिद्धिं लभते मुख्यां[1] शिवलोके च संस्थितिम् ।
ब्रह्मा ब्रह्माण्डमाहात्म्यमधिकृत्याऽब्रवीत् पुनः ॥

तच्च द्वादशसाहस्रं ब्रह्माण्डं द्विशताधिकम् ।
भविष्याणां च कल्पानां श्रूयते यत्र विस्तरः ॥

तद्ब्रह्माण्डपुराणं तु ब्रह्मणा समुदाहृतम् ।
यो हि दद्याद्व्यतीपाते पत्रोर्णयुगसंयुतम् ॥

राजसूयसहस्रस्य फलमाप्नोति मानवः ॥

इति विद्यादानम् ॥

1 I. O., मोक्षं for मुख्यां

## १३

# अथ कल्पदानम्

तत्र मत्स्यपुराणे[1]

कल्पानुकीर्तनं वक्ष्ये सर्वपापप्रणाशनम् ।
यस्याऽनुकीर्त्तनादेव वेदपुण्येन युज्यते ॥

प्रथमः श्वेतकल्पस्तु द्वितीयो नीललोहितः ।
वामदेवस्तृतीयस्तु ततो राथन्तरोऽपरः ॥

रौरवः पञ्चमः प्रोक्तः षष्ठः प्राण इति स्मृतः ।
सप्तमोऽथ बृहत्कल्पः कन्दर्पोऽष्टम उच्यते ॥

सद्योऽथ नवमः प्रोक्त ईशानो दशमः स्मृतः ।
व्यान एकादशः प्रोक्तस्तथा सारस्वतोऽपरः ॥

त्रयोदश उदानस्तु गारुडोऽथ चतुर्दशः ।
कौर्मः पञ्चदशो ज्ञेयः पौर्णमासी [2]प्रजापतेः ॥

षोडशो नारसिंहस्तु समानस्तु ततोऽपरः ।
आग्नेयोऽष्टादशः प्रोक्तः सोमकल्पस्तथाऽपरः ॥

मानवो विंशतिः प्रोक्तस्तत्पुमानिति चाऽपरः ।
वैकुण्ठश्चाऽपरस्तद्वल्लक्ष्मीकल्पस्तथाऽपरः ॥

चतुर्विंशस्तथा प्रोक्तः सावित्रीकल्पसंज्ञकः ।

1 हेमा. pp. 783 ff. म. पु., ch. 290

2 हेमा. p. 783, प्रजायते; So, म. पु., p. 575

पञ्चविंशतिमो घोरो वाराहस्तु तथाऽपरः ॥
सप्तविंशोऽथ वैराजो गौरीकल्पस्तथाऽपरः ।
माहेश्वरस्ततः प्रोक्तः त्रिपुरं यत्र घातितम् ॥
पितृकल्पस्तथाऽन्ते तु या कुहूर्ब्रह्मणः स्मृता ।
इत्येष ब्रह्मणो मासः सर्वपापप्रणाशनः ॥
आदावेव हि माहात्म्यं यस्मिन् यस्य विधीयते ।
तस्य कल्पस्य तन्नाम विहितं ब्रह्मणा पुरा ॥

[तथा][1]

यस्तु दद्यादिमान् कृत्वा हैमान् पर्वणि पर्वणि ।
ब्रह्मविष्णुपुरे कल्पं मुनिभिः पूज्यते दिवि ॥
सर्वपापक्षयकरं कल्पदानं यतो भवेत् ।
मुनिरूपांस्ततः कृत्वा दद्यात्कल्पान् विचक्षणः ॥

'मुनिरूपान्' मुन्याकारान् जाटदिधरान् ।

इति कल्पदानम् ॥

1 Eleven eines omitted from म. पु., pp. 575-576

# १४

# अथ तिथिदानम्

तत्र विष्णुः[1]

मार्गशीर्षे शुक्लपक्षदश्यां मृगशिरोयुक्तायां चूर्णित-लवणस्य सुवर्णनाभप्रस्थमेकं चन्द्रोदये ब्राह्मणाय प्रतिपा-दयेत्[2]। अनेन कर्मणा रूपसौभाग्यवानभिजायते। पौषी चेत्पुष्ययुक्ता स्यात्तस्यां गौरसर्षपकल्केनोच्छादितशरीरो[3] गव्यघृतपूर्णकुम्भेनाऽभिषिक्तः सर्वौषधिभिः सर्वगन्धैः सर्वबीजैश्च स्नातो घृतेनैव भगवन्तं वासुदेवं स्नापयित्वा पुष्पधूपगन्धदीपनैवेद्यादिभिश्चाऽभ्यर्च्य वैष्णवैः शाक्रैर्वा बार्हस्पत्यैश्च मन्त्रैः पावके हुत्वा सुवर्णेन घृतेन ब्राह्मणं स्वस्ति वाचयेत्। वासोयुगं तत्र कर्त्रे दद्यात्। अनेन कर्म-णा पुष्यति। माघी, मघायुता चेत्स्यात् तस्यां तिलैः श्राद्धं कृत्वा पूतो भवति। भोजनार्थं श्राद्धे तिलान् दत्वा सर्वजनप्रियो भवति[4]। फाल्गुनी, फल्गुनीभिर्युक्ता चेत् तस्यां ब्राह्मणाय सुसंस्कृतं स्वास्तीर्णशयनं निवेद्य भार्यां मनोज्ञां पक्षवतीं द्रविणवतीं चाऽऽप्नोति। नार्यपि भर्तारम्।

'भर्त्तारं' तादृग्गुणयुक्तम्। 'पक्षवती' बहुतरज्ञाति-बन्धुः।

1 हेमा. pp. 800–801 ff.; वि. स्मृ., ch. 90.

2 वि. स्मृ., प्रदापयेत्

3 *Ibid*, कल्कोद्वर्तितशरीरः

4 Missing in वि. स्मृ., p. 185.

चैत्री, चित्रायुता चेत् तस्यां चित्रवस्त्रप्रदानेन सौभाग्यमाप्नोति ।

'चित्रं' मनोज्ञं नानावर्णम् ।

वैशाख्यां पौर्णमास्यां ब्राह्मणसप्तकं क्षौद्रयुक्तैस्तिलैः सन्तर्प्य धर्मराजं प्रीणयित्वा पापेभ्यः पूतो भवति । ज्यैष्ठी ज्येष्ठायुता चेत् तस्यां [1]छत्रोपानह्प्रदानेन [2]गणाधिपत्यमाप्नोति । आषाढ्यामाषाढायुक्तायां अन्नपानदानेन तदेवाऽक्षयमाप्नोति । श्रावण्यां श्रवणयुक्तायां जलधेनुं अन्नवासोयुगान्वितां दत्वा स्वर्गलोकमाप्नोति । प्रौष्ठपद्यां तद्युक्तायां गोप्रदानेन सर्वपापविनिर्मुक्तो भवति । आश्वयुज्यामश्विनीगते चन्द्रमसि घृतपूर्णभाजनं सुवर्णयुतं विप्राय दत्वा दीप्ताग्निर्भवति । कार्तिकी चेत् कृत्तिकायुता स्यात्तस्यां सितमुक्षाणमन्यवर्णं वा शशाङ्कोदये सर्वसस्यरत्नगन्धोपेतं दीपमध्ये ब्राह्मणाय दत्वा कान्तारभयं न पश्यति ।

वैशाखे[3] मासि [शुक्ल] तृतीयायामुपोषितोऽक्षतैर्वासुदेवमभ्यर्च्य तान्येव च हुत्वा सर्वपापेभ्यः पूतो भवति । [4]यच्चाऽस्मिन् अहनि प्रयच्छति तत् अक्षय्यमाप्नोति ।

पौष्यां[5] समतीतायां कृष्णपक्षद्वादश्यां सोपवासः

1 I. O., पानीयदानेन

2 हेमा. p. 801, नगराधिपत्यं for गणाधिपत्यं

3 हेमा. p. 788

4 I. O., उषायां उपोषितोऽथास्मिन्

5 हेमा. p. 794

तिलैः स्नातस्तिलोदकं दत्वा तिलैर्वासुदेवमभ्यर्च्य, तानेव हुत्वा भुक्त्वा च सर्वपापेभ्यः पूतो भवति। माघ्यां समतीतायां कृष्णद्वादशीं सश्रवणां प्राप्य वासुदेवाग्रतो महावर्त्तिद्वयेन [1]दीपद्वयं दद्यात्। दक्षिणपार्श्वे महारजत-रक्तेन समग्रेण वाससा तैलतुलामष्टाधिकां दत्वा, वाम-पार्श्वे घृततुलां अष्टाधिकां समग्रेण श्वेतेन वाससा दद्यात्। एतत् कृत्वा यस्मिन् राष्ट्रेऽभिजायते, यस्मिन् देशे, यस्मिन् कुले, तत्रोज्वलो भवति।

'महारजतरक्तेन' कुसुम्भरसेन। 'तुला' पलशतम्।

वैशाख्यां पौर्णमास्यां तु ब्राह्मणान् सप्त पञ्च वा[2]।
क्षौद्रयुक्तैस्तिलैः कृष्णैर्वाचयेद्यदि वेतरैः॥
प्रीयतां धर्मराजेति यद्वा मनसि वर्तते।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति॥

यमः[3]

वैशाख्यामेव विधिवद् भोजयेद्ब्राह्मणान्दश।
त्रिरात्रमुषितः स्नात्वा कृसरं[4] प्रयतः शुचिः॥
गौरान्वा यदि वा कृष्णान् तिलान् क्षौद्रेण संयुतान्।
दत्वा दशसु विप्रेषु तानेव स्वस्ति वाचयेत्॥

1 हेमा. p. 795, दीपदानं

2 The following two verses are cited by हेमा. p. 797 as from विष्णुधर्मोत्तर

3 हेमा. p. 797

4 A. S. B., कृसरं; Udaipur Ms. has कृशरं

प्रीयतां धर्मराजेति पितॄन् देवांश्च तर्पयेत् ।
यावज्जीवकृतं पापं तत्क्षणादेव मुञ्चति ॥
अयुतायुतं च तिष्ठेत् स्वर्गलोके न संशयः[1] ।
मानवत्वं[2] न पश्येत्तु न च पापेन लिप्यते ॥

जाबालः[3]

शृतान्नमुदकुम्भं च वैशाख्यां तु विशेषतः ।
निर्दिश्य धर्मराजाय गोदानफलमाप्नुयात् ॥
सुवर्णतिलयुक्तैश्च ब्राह्मणान् सप्त पञ्च च ।
तर्पयेदुदपात्रैश्च ब्रह्महत्यां व्यपोहति ॥

महाभारते[4]

वैशाख्यां पौर्णमास्यां तु तिलान्दत्वा द्विजातिषु ।
तिला भक्षयितव्यास्तु सदा त्वालम्भनं च तैः ॥
कार्यं सततमिच्छद्भिः श्रेयः सर्वात्मना गृहे ॥

यमः

कार्तिकस्य तमिस्रे तु मघासु नवमीतिथौ ।
अहोरात्रोषितः स्नात्वा धर्मराजाय भोजयेत् ॥
विधिवद्ब्राह्मणान् सर्वान् स्वर्गलोके महीयते ।
तिलान् कृष्णाजिने कृत्वा सुवर्णं मधुसर्पिषी ॥

1 हेमा. p. 798, महीयते
2 *Ibid.*, मामेव तु
3 हेमा. p. 798
4 *Ibid.*

दत्वा तु ब्राह्मणायाऽऽशु सर्वं तरति दुष्कृतम् ।
धेनुं दत्वोभयमुखीं भूदानफलमाप्नुयात् ॥
माघान्धकारद्वादश्यां तिलैर्हुत्वा[1] हुताशनम् ।
तिलान्दत्वा च विप्रेभ्यः सर्वपापैः प्रमुच्यते[2] ॥
आदित्यवारे विप्राय सहिरण्यं सदैव तु[3] ।
यः प्रयच्छत्यपूपं च तस्य तुष्यति वै यमः ॥

स्कन्दपुराणे[4]

तिलपात्राणि यो दद्याद्विप्रेभ्यः शुद्धमानसः ।
अमावास्यां समासाद्य कृष्णानां सुसमाहितः ॥
स्वान् पितॄन्तर्पयित्वा तु अक्षयं नरपुङ्गवः ।
पितृलोकं समासाद्य चिरं ससुखमेधते ॥

'कृष्णानां' तिलानामिति शेषः ।

इति तिथिदानम् ॥

1 I. O. and A. S. B., हुत्वा; Udaipur Ms. has दत्वा
2 Cited by हेमा. p. 795
3 हेमा. p. 808
4 *Ibid*, p. 802

## अथ मासदानम्

तत्र विष्णुः[1]

आश्विनं सकलं मासं ब्राह्मणेभ्यः प्रत्यहं घृतं प्रदायाऽश्विनौ प्रीणयित्वा रूपभाग्भवति। तस्मिन्नेव मासि प्रत्यहं गोरसैर्ब्राह्मणान् भोजयित्वा आरोग्यभाग्भवति। तथा माघे मासि प्रत्यहमग्निं तिलैर्हुत्वा घृतकुल्माषं ब्राह्मणान् भोजयित्वा दीप्ताग्निर्भवति।

यमः[2]

कृशरं भोजयेच्चाऽत्र स्वशक्त्या शिशिरे द्विजान्।
दिप्ताग्नित्वमवाप्नोति स्वर्गलोकं स गच्छति ॥

तथा

घृतमाश्वयुजे मासि नित्यं दद्याद्द्विजातये।
प्रीणयित्वाऽश्विनौ देवौ रूपभागभिजायते[3] ॥

तिलप्रदः प्रजामिष्टां पुरुषः खलु विन्दति।
माघे मासि विशेषेण तमिस्रे तु विशेषतः[4] ॥

आदित्यपुराणे[5]

ज्येष्ठे मासि तिलान्दत्त्वा पौर्णमास्यां विशेषतः।

1 *Ibid*, p. 818
2 *Ibid*, p. 820
3 *Ibid*, p. 818
4 हेमा. p. 818 Attributes this verse to प्रचेताः
5 हेमा. p. 818

अश्वमेधस्य यत्पुण्यं तत्प्राप्नोति न संशयः ॥

देवीपुराणे[1]

धेनुं तिलमयीं माघ्यां दद्याद्यश्चोत्तरायणे ।
सर्वान् कामानवाप्नोति ज्येष्ठे जलमयीं[2] तथा ॥
पौषे घृतमयीं दद्याच्छ्रेष्ठाहे विधिना मुने ।
ईहितान् लभते कामान् स्थानेषु विविधेषु च ॥

तथा[3]

मार्गे रसोत्तमं दद्याद्घृतं पौषे महाफलम् ।
तिलान्माघे मुनिश्रेष्ठ सप्त धान्यानि फाल्गुने ॥

'रसोत्तमं' लवणम्[4] ।

विचित्राणि च वस्त्राणि चैत्रे दद्याद्द्विजोत्तमः ।
वैशाखे द्विज गोधूमान् ज्येष्ठे तोयभृतं घटम् ॥
आषाढे चन्दनं देयं सकर्पूरं महाफलम् ।
नवनीतं नभोमासि छत्रं प्रौष्ठपदे मतम् ॥
गुडशर्करवर्णाढ्यान् लड्डुकानाश्विने मुने ।
दीपदानं महापुण्यं कार्तिके यः प्रयच्छति ॥
सर्वान् कामानवाप्नोति क्रमेणैवमुदाहृतम् ।
व्रतान्ते गां शुभां दद्यात् सवत्सां कांस्यदोहनाम् ॥

1 *Ibid.*

2 हेमा. p. 818, तिलमयीं for जलमयीं

3 हेमा. p. 817

4 Reproduced by हेमा. p. 817

सयुगां सस्रजं वत्सं दापयेद्विधिना मुने ।
देवीं विरिञ्चिनं सूर्यं विष्णुं वाऽथ यथाविधि ॥
स्वभावशुद्धो विधिवत् पूजयित्वा द्विजोत्तमम् ।
दातव्या वीतरागे तु कामक्रोधविवर्जिते ॥
अयाचके सदाचारे विनीते नियमान्विते ।
गोदानाल्लभते कामान् गोलोके सुमनोहरान् ॥
व्रतान्ते मासदानाख्यसमाप्तौ नियमे तथा* ।
आषाढे तोयधेनुं च घृतं भाद्रपदे तथा ॥
माघे च तिलधेनुः स्याद्यो दत्वा लभते हितम् ॥

महाभारते[1]

माघे मासि तिलान् यस्तु ब्राह्मणेभ्यः प्रयच्छति ।
सर्वसत्वसमाकीर्णं नरकं स न पश्यति ॥

यमः

सर्वपातकसङ्घातः कामतो वाऽप्यकामतः ।
शुद्धिं तस्य प्रवक्ष्यामि स्वर्गसाधनमेव च ॥
शुक्लैः कृष्णैर्यथालब्धैर्द्वात्रिंशदङ्गुलोद्धृतः ।
राशिस्तिलैः समे देशे कर्तव्यः पुरुषायतः ॥
प्रतिमास्ताङ्गुलोत्क्षेपसौवर्णविभवे सति ? ।

* The India Office Ms. repeats verses from विद्यादान-प्रकरण begining from आयुर्वेदप्रभावेण किं न दत्तं भवेच्छुचिः ( Fol. 72 ) to the verse व्रतेन मासदानाच्च सुखमाप्नोति शाश्वतम् ( Fol. 78 ) in मासदानप्रकरण

1 हेमा. p. 819

क्षौद्रेण पयसा दध्ना घृतेनाऽऽपूरयेद्धटान् ॥
यथाविभवविस्तारं ब्राह्मणे श्रोत्रियेऽर्थिनि ।
दद्यान्माघे च वैशाखे विषुवे चोत्तरायणे ॥
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥

वामनपुराणे[1]

माघे मासि तिलाः शस्ताः तिलधेनुश्च दानव ।
इध्मेन्धनादयश्चाऽन्ये माधवप्रीणनाय तु[2] ॥
फाल्गुने व्रीहयो गावो वस्त्रं कृष्णाजिनान्वितम् ।
गोविन्दप्रीणनार्थाय दातव्यं पुरुषर्षभैः[3] ॥
चैत्रे विचित्रवस्त्राणि शयनान्यासनानि च ।
विष्णोः प्रीत्यर्थमेतानि देयानि ब्राह्मणेष्वथ ॥
गन्धाश्च माल्यानि तथा वैशाखे सुरभीणि च ।
देयानि द्विजमुख्येभ्यो मधुसूदनतुष्टये ॥
उदकुम्भं[4] च धेनुं च तालवृन्तं सचन्दनम् ।
त्रिविक्रमस्य प्रीत्यर्थं दातव्यं साधुभिस्तथा ॥

'तालवृन्तं' तालव्यजनम् ।

उपानद्युगलं छत्रं लवणामलकानि च ।
आषाढे वामनप्रीत्यै दातव्यानि [5]स्वशक्तितः ॥

1 हेमा. p. 816
2 I. O., इष्टैश्च दापनं चांऽन्यैर्माधवः प्रीयतामिति
3 हेमा. p. 816, भरतर्षभ
4 A. S. B., उदकुंभाम्बुधेनुं च
5 हेमा. p. 816, भक्तितः

घृतं च क्षीरकुम्भाश्च घृतधेनुः फलानि च ।
श्रावणे श्रीधरप्रीत्यै दातव्यानि विपश्चितैः ॥
मासि भाद्रपदे दद्यात् पायसं मधुसर्पिषी ।
हृषीकेशप्रीणनार्थं लवणं सगुडोदनम् ॥
तिलांस्तुरङ्गवृषभं दधि ताम्रायसादिकम् ।
प्रीत्यर्थं पद्मनाभस्य देयमाश्वयुजे नरैः ॥
रजतं कनकं दीपान् मणिमुक्तादिकं तथा ।
दामोदरस्य प्रीत्यर्थं प्रदद्यात्कार्तिके नरः ॥
खरोष्ट्राश्वतरान् नागान् शकटोक्षमजाविकम्[1] ।
दातव्यं केशवप्रीत्यै मासि मार्गशिरे नरैः ॥
प्रासादनगरादीनि गृहप्रावरणानि च ।
नारायणस्य तुष्ट्यर्थं पौषे देयानि यत्नतः ॥
दासीदासमलङ्कारमन्नं षड्रससंयुतम् ।
पुरुषोत्तमप्रीत्यर्थं प्रदेयं सार्वकालिकम् ॥
यद्यदिष्टतमं [2]लोके यच्चाऽप्यस्ति गृहे शुचि ।
तत्तद्धि देयं प्रीत्यर्थं देवदेवस्य चक्रिणः ॥

इति मासदानानि ॥

1 हेमा. p. 817, सूकराश्वं for शकटोक्षं

2 A. S. B. and I. O., किञ्चिद्यच्चाऽप्यस्ति शुभे गृहे

## १५

# अथ नक्षत्रदानानि

तत्र विष्णुः[1]

प्रतिमासं रेवतीयुते चन्द्रमसि मधुघृतयुतं परमान्नं ब्राह्मणान् भोजयित्वा रेवतीं प्रीणयित्वा रूपभाग्भवति ।

'परमान्नं' पायसम् ।

यमः[2]

मासि मासि च रेवत्यां ब्राह्मणान् घृतपायसम् ।
सदक्षिणं भोजयित्वा रूपभागभिजायते ॥

महाभारते[3]

कृत्तिकासु महाभाग पायसेन ससर्पिषा ।
सन्तर्प्य ब्राह्मणान् साधून् [4]लोकानाप्नोत्यनुत्तमान् ॥
रोहिण्यां प्रथितैर्मार्गैर्मासै यत्नेन सर्पिषा[5] ।
पयोन्नपानं[6] दातव्यमानृण्यार्थं द्विजातये ॥

'प्रथितैः' प्रसिद्धैः । 'मार्गैः' मृगमांसैः ।

1 हेमा. p. 813

2 *Ibid.*

3 हेमा. p. 809

4 I. O., भोगान्

5 हेमा. p. 809 reads : रोहिण्यां पाण्डवश्रेष्ठ माषै रत्नेन सर्पिषा ।

6 *Ibid.*, पयोनुपानं

दोग्ध्रीं दत्वा सवत्सां तु नक्षत्रे सोमदैवते ।
स गच्छेन्मानुषाल्लोकात् स्वर्गलोकमनुत्तमम्[1] ॥
आर्द्रायां कृशरं दत्वा तिलमिश्रमुपोषितः[2] ।
नरस्तरति दुर्गाणि क्षुरधारांश्च पर्वतान् ॥
अपूपान् पुनर्वसौ दत्वा तथैवाऽन्नानि शोभने[3] ।
यशस्वी रूपसम्पन्नो बह्वन्ने जायते कुले ॥
पुष्ये तु कनकं दत्वा कृतं वाऽकृतमेव वा ।
अनालोकेषु लोकेषु सोमवत् स विराजते ॥

'कृतं' घटितम् । 'अकृतं' अघटितम्[4] ।

आश्लेषासु तथा रूप्यं वृषभं वा प्रयच्छति ।
स सर्वभयनिर्मुक्तः शास्त्रवानभिजायते ॥
मघासु तिलपूर्णानि वर्द्धमानानि मानवः ।
प्रदाय पशुमांश्चैव पुत्रवांश्च प्रजायते ॥
फाल्गुनीपूर्वसमये ब्राह्मणानामुपोषितः ।
भक्ष्यान् फाणितसंयुक्तान् दत्वा सौभाग्यमृच्छति ॥

'फाल्गुनीपूर्वसमये' पूर्वफल्गुनीसमये । 'फाणितं' गुडविकारः[5] ।

1 हेमा. p. 809, दत्वाऽऽदित्यविमानस्थः स्वर्गं प्राप्नोत्यनुत्तमम् । सोमदैवत-नक्षत्रं मृगशीर्षम्

2 *Ibid.*, समाहितः

3 *Ibid.*, पूपं पुनर्वसौ दत्वा घृतपूर्णं सुपाचितम्

4 Reproduced by हेमा. p. 809

5 Reproduced by हेमा. p. 810

घृतक्षीरसमायुक्तं विधिवत् षाष्टिकौदनम् ।
उत्तराविषये दत्वा स्वर्गलोके महीयते ॥

'उत्तराविषये' उत्तराफाल्गुनीसमये[1] ।

यद्वा प्रदीयते दानमुत्तराविषये नरैः ।
महाफलमनन्तश्च भवतीति विनिश्चयः ॥
हस्ते हस्तिरथं दत्वा चतुर्युक्तमुपोषितः ।
नरस्तरति दुर्गाणि क्षुरधारांश्च पर्वतान् ॥

'चतुर्युक्तं' चतुर्भिर्हस्तिभिः संयुक्तम्[2] ।

चित्रायां वृषभं दत्वा पुण्याङ्गां गां[3] च भारत ।
चरत्यप्सरसां लोके रमते नन्दने वने ॥
स्वातीष्वथ धनं दत्वा यदिष्टतममात्मनः ।
प्राप्नोति लोकान् सशुभान् इह चैव महद्यशः ॥
विशाखायामनड्वाहं धेनुं दत्वा च दुग्धदाम् ।
सप्रासङ्गं च शकटं सधान्यं वस्त्रसंयुतम् ॥
पितॄन् देवांश्च प्रीणाति प्रेत्य चाऽऽनन्त्यमश्नुते ।
न च दुर्गाण्यवाप्नोति स्वर्गलोकं स गच्छति ॥

'प्रासङ्गः' द्वितीयं युगकाष्ठम् ।

1 Reproduced by हेमा. p. 810

2 Reproduced by हेमा. p. 810

3 हेमा. p. 810 explains : पुण्याङ्गां गां इति शुभलक्षणलक्षितशरीरां धेनुमित्यर्थः ।

अनुराधासु प्रावारं वस्त्रोत्तरमुपोषितः ।
दत्वा युगशतं वाऽपि नरः स्वर्गे महीयते ॥

'प्रावारः' प्रच्छदपटः। 'वस्त्रोत्तरं' परिधानवस्त्रादिकम् ।

कालशाकं च विप्रेभ्यो दत्वा मर्त्यः समूलकम् ।
ज्येष्ठायां मृत्युमुत्साद्य गतिमिष्टां च गच्छति ॥
मूले मूलफलं दत्वा ब्राह्मणेभ्यः समाहितः ।
स्वपितन् प्रीणयत्येव गतिमिष्टां स गच्छति ॥
अथ पूर्वास्वषाढासु दधिपात्राण्युपोषितः ।
कुलवृत्तोपसम्पन्ने ब्राह्मणे वेदपारगे ॥
प्रदाय जायते प्रेत्य कुले बहुगुणाकुले ।
उदमन्थं ससर्पिष्कं प्रभूतमधुफाणितम् ॥
दत्वोत्तरास्वषाढासु सर्वलोकानवाप्नुयात् ।

'उदमन्थः' उदकमिश्राः सक्तवः[1] ।

दुग्धं त्वभिजितो योगे दत्वा मधुघृतप्लुतम् ।
धर्मविद्भ्यो[2] मनीषिभ्यः स्वर्गलोके महीयते[3] ॥
श्रवणे कम्बलं दत्वा वस्त्रान्तरितमेव च ।
श्वेतेन याति यानेन स्वर्गलोकान् सुसंयतान् ॥

1 Reproduced by हेमा. p. 811, who adds : फाणितं दुग्धखण्ड-विकारः

2 हेमा. p. 811 reads धर्मनिष्ठः

3 Hemādri adds: अयमर्थः उत्तराषाढानक्षत्रचतुर्थपादः श्रवणस्याऽऽद्यघटिकाचतुष्टयं अभिजियोगः ।

गोप्रयुक्तं धनिष्ठासु यानं दत्वा समाहितः ।
वस्त्ररश्मिं नवं दत्वा प्रेत्य राज्यं प्रपद्यते ॥

'वस्त्ररश्मिः' वस्त्रघटितरज्जुः ।

गन्धाञ्छतभिषायोगे दत्वा सागुरुचन्दनम् ।
प्राप्नोत्यप्सरसां लोकान् प्रेत्य गन्धांश्च शाश्वतान् ॥
पूर्वाभाद्रपदायोगे राजमाषान् प्रदाय वै ।
सर्वभक्ष्यफलोपेतः स वै प्रेत्य सुखी भवेत् ॥
औरभ्रमुत्तरायोगे यस्तु मांसं प्रयच्छति ।
पितॄन् प्रीणाति सकलान् प्रेत्य चाऽऽनन्त्यमश्नुते[1] ॥
कांस्योपदोहनीं धेनुं रेवत्यां यः प्रयच्छति ।
स प्रेत्य कामानादाय दातारमुपतिष्ठति ॥
रथमश्वसमायुक्तं दत्वाऽश्विन्यां नरोत्तमः ।
हस्त्यश्वरथसम्पन्न उत्तमे जायते कुले ॥
भरणीषु द्विजातिभ्यस्तिलधेनुं प्रदापयेत् ।
गाः प्रभूताश्च प्राप्नोति नरः प्रेत्य यशस्तथा ॥

इति नक्षत्रदानम् ॥

1 हेमा. p. 811 explains : उरभ्रो मेषः तस्य मांसं औरभ्रम्

१६

# अथाऽन्नदानम्

तत्र बृहस्पतिः[1]

अन्नदानं [2]बहुगुणं सर्वदानाधिकं स्मृतम् ।
अन्नाद्धि प्राणजननं नृणां सञ्जायते सदा ॥
प्राणाप्यायनमात्रं तु यो विप्राय प्रयच्छति ।
दुर्भिक्षेऽत्र विशेषेण स लभेताऽक्षयं दिवम्[3] ॥
हेमरत्नाम्बरयुतो भुञ्जानो न हि जीवति ।
अश्नन् विनाऽप्यलङ्कारैर्जीर्णवस्त्रेण जीवति ॥
तस्मात् प्रदद्याद्विप्रेभ्यः संस्कृतान्नं सदक्षिणम् ।
तेनेह कीर्तिमाप्नोति स्वर्गं चाऽनन्तकं तथा ॥

देवलः[4]

सर्वेषामेव दानानामन्नदानमनुत्तमम् ।
कोऽन्योऽस्ति प्राणदादस्माद्विशिष्टो ह्यन्नदात्परः ॥

तथा

कृत्वाऽपि पातकं कर्म यो दद्यादन्नमीप्सितम् ।
ब्राह्मणानां विशेषेण स निहन्त्यात्मनोऽयशः[5] ॥

1 हेमा. pp. 895–6 ff.

2 I. O., and हेमा., गुणकरं

3 हेमा. p. 896, दातव्यं मानवैर्भुवि

4 हेमा. p. 896

5 हेमा. p. 896, तमः for अयशः

आदरेण च भक्त्या च यदन्नमुपदीयते ।
तत्प्रीणयति गात्राणि नाऽमृतं मानवर्जितम् ॥
दुर्लभश्चाऽन्नदाता तु भोक्ता चैव सुदुर्लभः ।
प्रदाता चैव भोक्ता च तावुभौ स्वर्गगामिनौ ॥
योऽन्नं बहुमतं भुङ्क्ते यश्चाऽन्नं नाऽवमन्यते ।
यश्चाऽन्नं प्रीतितो दद्यात्तस्याऽन्नमुपतिष्ठति ॥
प्रीतितोऽन्नं च यो दद्याद्गृह्णीयाद्योऽभिपूजितः ।
प्रीतितोऽक्षयमश्नाति पूजितः स्वर्गमश्नुते ॥
यो दद्यादप्रियेणाऽन्नं यश्चाऽन्नं नाऽभिनन्दति ।
तावुभौ नरके मग्नौ वसेतां शरदः शतम् ॥

महाभारते[1]

यस्य ह्यन्नमुपाश्नन्ति ब्राह्मणानां शतं शतम् ।
इष्टेन मनसा दत्तं न स तिर्यग्गतिर्भवेत् ॥
ब्राह्मणानां सहस्राणि दश भोज्या नरर्षभ ।
नरोऽधर्मात् प्रमुच्येत पापेषु निरतः सदा ॥
भोजयित्वा दशशतं नरो वेदविदां नृप ।
न्यायविद्धर्मविदुषां स्मृतिभाष्यविदां तथा ॥
न याति नरकं घोरं संसारं च न सेवते ।
यतेत ब्राह्मपूर्वं तु भोक्तुमन्नं सदा गृही ॥
अवन्ध्यं दिवसं कुर्यादन्नदानेन मानवः ।
भैक्षेणाऽन्नं समाहृत्य विप्रेभ्यो यः प्रयच्छति ॥

1 हेमा. p. 899; Cited from ब्रह्मवैवर्त

स्वाध्यायनिरतो विप्रो दत्वेह सुखमेधते ।
सर्वावस्थं मनुष्येण न्यायादन्नमुपार्जितम् ॥
कार्यं पात्रगतं नित्यमन्नं हि परमा गतिः ॥

तथा

कौमुदे शुक्लपक्षे तु योऽन्नदानं करोत्यलम् ।
स सन्तरति दुर्गाणि प्रेत्य चाऽऽनन्त्यमश्नुते ॥
कुटुम्बं पीडयित्वाऽपि ब्राह्मणाय महात्मने ।
दातव्यं भक्ष्यपेयानामात्मनो भूतिमिच्छता ॥

नन्दिपुराणे[1]

अन्नाद्भूतानि जातानि देवा ह्यन्नादिकाङ्क्षिणः ।
न तस्य पात्रादिविधिर्विना श्राद्धं प्रकीर्त्तितम् ॥

तथा

अपि कीटपतङ्गानां शुनां चाण्डालयोनिनाम् ।
दत्वाऽन्नं लोकमाप्नोति प्राजापत्यं समाश्नुतम्[2] ॥
बान्धवेभ्योऽतिथिभ्योऽन्नं [3]विप्रेभ्योऽन्नं प्रयच्छति
दीनान्धकृपणानां च स्वर्गः स्यादन्नदायिनाम् ॥
ग्रासमात्रं नरो दत्वाऽन्नानामतिगृघ्नवे[4] ।
स्वर्गे वसेत् समानां तु शतं भोगैर्मनोरमैः ॥

1 हेमा. p. 900
2 हेमा. p. 900, समासतः
3 I. O., विप्रेभ्यः; Udaipur Ms., पुत्रेभ्यः
4 हेमा. p. 900, भूतानामन्नगृघ्नवे

ग्रासे ग्रासे फलं ह्येतद्विधिवत् परिकीर्तितम् ।
एतदेवाऽयने प्रोक्तं द्विगुणं पुण्यगौरवम् ॥
अन्नं विना कृशाङ्गस्य दत्वाऽन्नं देशकालतः ।
फलं [1]पञ्चगुणं प्रोक्तं सर्वभावसमन्वितम् ॥

'सर्वभावसमन्वितं' राजसादिभावसमन्वितम् ।

देवतानां च यो दद्यादन्नाद्यं श्रद्धयाऽन्वितः ।
सिक्थात्सिक्थाद्वसेल्लक्षं समानाममरैः सह ॥
एतद्दशगुणं पुण्यमन्ने व्यञ्जनसंयुते ।
यथेष्टदेवतादत्तादेतत् पुण्यं प्रकीर्तितम् ॥
यो दद्याद्ब्राह्मणेऽन्नानि तस्य द्विगुणितं फलम् ।
तस्माद्विष्णोस्तु दत्वाऽन्नं द्विगुणं फलमश्नुते ॥
रुद्रायाऽन्नप्रदानेन फलमेतच्चतुर्गुणम् ।
श्रद्धाकालसमायोगाद् व्यञ्जनानां च योगतः ॥
शतसंख्यं भवेत्पुण्यं सम्यगन्नप्रदायिनाम् ॥

इत्यन्नदानम् ॥

1 I. O., शतगुणं

# १७

# अथाऽऽरोग्यदानम्

तत्र नन्दिपुराणे[1]

धर्मार्थकाममोक्षाणामारोग्यं साधनं यतः[2] ।
अतस्त्वारोग्यदानेन नरो भवति सर्वदः ॥
आरोग्यशालां कुरुते महौषधपरिच्छदाम् ।
विदग्धवैद्यसंयुक्तां भृत्यावसथसंयुताम् ॥
वैद्यस्तु शास्त्रवित् प्राज्ञो दृष्टौषधपरायणः[3] ।
औषधीमूलमर्मज्ञः[4] समुद्धरणकालवित् ॥
रसवीर्यविपाकज्ञः [5]शालिमानौषधीगणे ।
योगवित् प्राणिनां[6] देहं यो धिया प्रविशेद्बुधः ॥
धातुपथ्यमयज्ञश्च निदानविदतन्द्रितः ।
व्याधीनां पूर्वलिङ्गज्ञस्तदुत्तरविधानवित् ॥
देशकालविभागज्ञः[7] चिकित्साशास्त्रवित्तथा ।

1 हेमा. p. 822

2 I. O. and हेमा., साधनैर्युतः

3 हेमा. p. 822, पराक्रमः

4 I. O., मर्मज्ञः; Udaipur Ms., पूर्णयज्ञः

5 I. O., शालिमांस

6 I. O. and हेमा., देहिनां

7 हेमा. p. 822, विधानज्ञः

अष्टाङ्गायुर्वेदवेत्ता मुष्टियोगविधानवित् ॥

अष्टाङ्गान्यायुर्वेदस्य । तद्यथा—शल्यं शालाक्यं कायचिकित्सा भूतविद्या कौमारभृत्यं अगदतन्त्रं रसायनतन्त्रं वाजीकरणतन्त्रमिति सुश्रुतोक्तानि[1] ।

एवंविधः शुभो वैद्यो भवेद्यत्राभियोजितः[2] ।
आरोग्यशालामेवं तु कुर्याद्यो धर्मसंश्रयः ॥
स पुमान् धार्मिको लोके स कृतार्थः स बुद्धिमान् ।
सम्यगारोग्यशालायामौषधैः स्नेहपावनैः[3] ॥
व्याधितं निरुजीकृत्याऽप्येकं करुणया युतः ।
प्रयाति ब्रह्मसदनं कुलसप्तकसंयुतः ॥
आढ्यो वित्तानुसारेण दरिद्रः फलभाग्भवेत् ।
दरिद्रस्य कुतः शाला आरोग्याय भिषक् युवा ॥
अपि मूलेन केनाऽपि मर्दनाद्यैरथाऽपि वा ।
स्वस्थीकृते भवेन्मर्त्यो पूर्वोक्तं लोकमव्ययम् ॥
वातपित्तकफाद्यानां चयापचयभेदिनाम् ।
यस्तु स्वल्पाभ्युपायेन मोचयेत् व्याधिपीडितान् ॥
सोऽपि याति शुभान् लोकानवाप्यान्यज्ञयाजिभिः ॥

इत्यारोग्यदानम् ॥

1 Reproduced by. हेमा. p. 822

2 हेमा. pp. 823 ff.

3 हेमा. p. 823, पाचनैः

# १८

# अथाऽभयदानम्

तत्र विष्णुः[1]

सर्वप्रदानाधिकमभयप्रदानम् । तत्प्रदानेनाऽभीष्टं लोकमाप्नुयात् ।

संवर्तः

भूताभयप्रदानेन सर्वान् कामानवाप्नुयात्[2] ।
दीर्घमायुः स लभते सदा च सुखितो भवेत् ॥

नन्दिपुराणे[3]

महतां सूक्ष्मदेहानां तथा च व्याधितात्मनाम् ।
हिंस्राणां सौम्यमूर्तिनां [4]सर्वथा ह्यभयात् फलम् ॥
वरमेकस्य सत्वस्य जीविताभयरक्षणम् ।
न तु विप्रसहस्रस्य गोसहस्रं सदक्षिणम् ॥

मार्कण्डेयपुराणे[5]

धिक् तस्य जीवितं पुंसः शरणार्थिनमातुरम् ।
यो नाऽऽर्तमनुगृह्णाति वैरिपक्षमपि ध्रुवम् ॥

1 हेमा. p. 867

2 हेमा. p. 867 and I. O.

3 I. O. has आदित्यपुराणे

4 हेमा. p. 867, तथाहि अफलदाभयम्

5 हेमा. p. 867

यज्ञदानतपांसीह परत्र च न भूतये।
भवन्ति तस्य यस्यार्थे परित्राणे न मानसम्॥

महाभारते[1]

लोभाद्द्वेषाद्भयाद्वाऽपि यस्त्यजेत् शरणागतम्।
ब्रह्महत्यासमं तस्य पापमाहुर्म्मनीषिणः॥

तथा[2]

प्राणिनं वध्यमानं हि यः शक्तः समुपेक्षते।
स याति नरकं घोरमिदमाहुर्म्मनीषिणः[3]॥
चतुस्सागरपर्यन्तां यो दद्यात्पृथिवीमिमाम्।
सत्वेभ्यो[4] ह्यभयं यश्च तयोरभयदोऽधिकः॥

रामायणे[5]

बद्धाञ्जलिपुटं दीनं धावन्तमपराधिनम्।
न हन्याच्छरणं प्राप्तं सतां धर्ममनुस्मरन्॥
आर्तो वा यदि वा त्रस्यः परेषां शरणागतः[6]।
अपि प्राणान् परित्यज्य रक्षणीयः कृतात्मना॥
न चेद्भयाद्वा मोहाद्वा कामाद्वा तन्न रक्षति।
स्वयं शक्त्या यथान्यायं तत्पापं लोकगर्हितम्॥

1 *Ibid.*

2 *Ibid*, p. 868

3 *Ibid*, and I. O., इति प्राहुः

4 I. O., सर्वेभ्यो

5 हेमा. p. 868

6 I. O., शरणं गतः

विष्णुः[1]

विनष्टः पश्यतो [2]यस्यारक्षितः शरणागतः ।
आदाय सुकृतं तस्मात् सर्वं गच्छत्यरक्षितः ॥
सुपर्याप्तनिसृष्टस्य नाऽश्वमेधस्य यत्फलम् ।
तत्फलं जातसंत्रासे रक्षिते शरणागते ॥

'सुपर्याप्तनिसृष्टस्य' सुपर्याप्तं सुसम्पूर्णं निसृष्टं दानं यस्य सः तथा ।

इत्यभयदानम् ॥

## अथ द्विजस्थापनम्

तत्र कालिकापुराणे[3]

कारयित्वा तथोद्वाहं श्रोत्रियाणां कुलेषु च ।
वेदविच्छीलवृत्तेषु द्विजेष्वेकादशेष्वथ ॥
ततो गृहाणि रम्याणि कुर्यादेकादशैव तु ।
कारयित्वा तु धान्यैश्च विविधैश्च प्रपूरयेत् ।
दासीगोमहिषीश्चाऽपि शयनासनपादुकाः ॥
भाजनानि विचित्राणि ताम्रमृण्मयकानि च ।
पात्राणि भोजनार्थानि कृत्स्नं सोपस्करं च यत् ॥

1 हेमा. p. 868, Name not mentioned by हेमा.

2 Udaipur Ms. reads यस्य रक्षितः

3 हेमा. p. 652

लोहं च कनकं चैव वस्त्राणि तु विशेषतः ।
सम्भृत्यैतं सुसम्भारं तद्गृहेष्वातियोजयेत् ॥
योजयेच्चैव वृत्त्यर्थं शक्तितो वा शतं शतम् ।
पृथक् पृथक् लाङ्गलानां निवर्तनशतार्द्धतः ॥
विषयं कर्वटं खेटं ग्रामं [1]ग्रामार्द्धमेव वा ।
योजयेत् सोममूर्तिं च चिन्तितेषु द्विजेषु च ॥
एकादशैव तास्तत्र दाम्पत्योमाहरात्मकाः ।
विचिन्त्य परया भक्त्या तद्गृहेषु प्रवेशयेत् ॥
ग्राहयेदग्निहोत्राणि प्रवेश्यैतान् द्विजोत्तमान् ।
विधिपूर्वं यथान्यायमात्मनः श्रेयसे नरः ॥
अदुष्टकुलजानां च विधिरेषां चिरन्तनः[2] ।
शिवभक्त्या विभक्तानां द्विजानां कारयेत्सदा ॥
यश्च प्रेष्यान् द्विजान् मूढो योजयेद्धव्यकव्ययोः ।
न भवेत्तत्फलं तस्य वैदिकीयं स्मृतिर्बुधाः[3] ॥
यज्ञदानं व्रताद्यं च तीर्थयात्रादिकं च यत् ।
यस्त्वेवं कारयेज्जन्तुः तेन सर्वमनुष्ठितम् ॥

एवं यथा विवाहादि कारयतः फलविशेषः, तथा धनं दत्वा यज्ञदानव्रततीर्थयात्रादिकं कारयतोऽपि ।

स यात्यर्कसमानाभं विमानं रत्नमालिनम् ।
आरुह्य तत्पदं पुण्यं सुरस्त्रीभिरलङ्कृतम् ॥

1 A. S. B., ग्रामर्द्धिमेव च
2 I. O., विवक्षितः
3 हेमा. p. 953, श्रुतिर्ध्रुवा

विमानैश्चाऽपरैर्दिव्यैः सहस्रैः परिवारितः ।
सर्वलोकगतान् भोगान् भुक्त्वा तस्मिन् प्रपद्यते ॥
ज्ञात्वा सुवित्तसामर्थ्यमेकं चोद्वाहयेद्द्विजम् ।
तेन प्राप्नोति तत्स्थानं शिवभक्तो नरो ध्रुवम् ॥
स्थानेन स्थानसम्प्राप्तिर्विधिदत्तेन जायते ॥

दक्षः[1]

मातापितृविहीनं तु संस्कारोद्वाहनादिभिः ।
यः स्थापयति तस्येह पुण्यसंख्या न विद्यते ॥

आदित्यपुराणे[2]

भूमिपालं च्युतं राज्याद्यस्तु संस्थापयेद्बुधः ।
तस्य वासो मुनीन्द्रेह नाकपृष्ठे न संशयः ॥

इति द्विजस्थापनम् ॥

1 हेमा. p. 652
2 हेमा. p. 653

# १९

# अथ प्रकीर्णदानानि

तत्र मनुः[1]

वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः ।
तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ॥
भूमिदः [2]स्वर्गमाप्नोति दीर्घमायुर्हिरण्यदः ।
गृहदोऽग्र्याणि वेश्मानि रूप्यदो रूपमुत्तमम् ॥
वासोदश्चन्द्रसालोक्यमश्विसालोक्यमश्वदः ।
अनडुहः श्रियं पुष्टां गोदो ब्रध्नस्य विष्टपम् ॥
यानशय्याप्रदो भार्यामैश्वर्यमभयप्रदः ।
धान्यदः शाश्वतं सौख्यं ब्रह्मदो ब्रह्मसाम्यताम्[3] ॥

'ब्रह्मसाम्यतां' ब्रह्मसमानगतित्वम् ।

याज्ञवल्क्यः[4]

भूदीपाश्वान्नवस्त्राम्भस्तिलसर्पिःप्रतिश्रयान् ।
नैवेशिकं स्वर्णरूप्यं दत्वा स्वर्गे महीयते ॥

1 हेमा. p. 159

2 I. O., भूमिमाप्नोति

3 हेमा. p. 160, ब्रह्मसार्ष्टिताम्

4 हेमा. p. 160

गृहधान्याभयोपानच्छत्रमाल्यानुलेपनम् ।
यानं वृक्षं प्रियं शय्यां दत्वाऽत्यन्तं सुखी भवेत् ॥

'प्रतिश्रयः' प्रवासिनामाश्रयः । 'नैवेशिकं' विवाहप्रयोजनकं द्रव्यम्[1] ।

बृहस्पतिः

वस्त्रान्नपुष्कलयुतं गृहं विप्राय योऽर्पयेत् ।
तस्य नो क्षीयते वंशः स्वर्गं प्राप्नोत्यनुत्तमम् ॥

महाभारते

बीजैरुपेतं शयनैरुपेतं दद्याद्गृहं यः पुरुषो द्विजाय ।
सुखाभिरामं बहुरत्नपूर्णं लभेदधिष्ठानवरं स राजन् ॥

तथा

तिला नित्यं प्रदातव्या यथाशक्ति द्विजर्षभ ।
नित्यदानात्सर्वकामफलं निर्वर्तयेत्पुनः ॥

यमः

दत्वा प्रतिश्रयं लोकं यथा दत्वैव चाऽभयम्[2] ।
तथा दत्वा क्षितिं विप्रे ब्रह्मलोके महीयते ॥
छत्रदो गृहमाप्नोति गृहदो नगरं तथा ।
उपानह्प्रदानेन रथमाप्नोत्यनुत्तमम् ॥
इन्धनानां प्रदानेन दीप्ताग्निर्भुवि जायते ।

1 Reproduced by हेमा. p. 160
2 हेमा. p. 160

गवां ग्रासप्रदानेन सर्वपापैः प्रमुच्यते ॥
रुक्मदः सर्वमाप्नोति रूप्यदो रूपमुत्तमम् ।
वासोदश्चन्द्रसालोक्यं सूर्यसालोक्यमश्वदः ॥
राजोपकरणं दत्वा रत्नानि विविधानि च ।
नगरं च तथा दत्वा राजा भवति भूतले ॥

तथा[1]

यस्तु सम्भृत्य सम्भारं ब्राह्मणेभ्यः प्रयच्छति ।
तस्य पुण्यकृतो लोकान् नो तस्य प्रभवाम्यहम् ॥

'सम्भृत्य सम्भारं' यज्ञविवाहाद्युपस्कारद्रव्याणि[2] ।

तथा

गोरसानां प्रदानेन तृप्तिमाप्नोत्यनुत्तमाम् ।
घृतप्रदानेन तथा दीर्घं विन्दति जीवितम् ॥

संवर्तः

नानाविधानि द्रव्याणि धनानि विविधानि च ।
आयुःकामेन देयानि स्वर्गमक्षयमिच्छता ॥

'द्रव्याणि' भक्ष्यभोज्यानि । 'धनानि' हिरण्यादीनि ।

वस्त्रदाता सुवेषः स्याद्रूप्यदो रूपमुत्तमम् ।
हिरण्यदो महाबुद्धिं दीर्घमायुश्च विन्दति ॥

1 हेमा. p. 261 has seven additional lines, which may have been in the कल्पतरु

2 Reproduced by हेमा. p. 261

फलमूलानि पक्वानि शाकानि विविधानि च ।
यानानि दत्वा विप्रेभ्यो मुदा युक्तः सदा भवेत् ॥
औषधं स्नेहमाहारं रोगिणे रोगशान्तये ।
ददानो रोगरहितः सुखी दीर्घायुरेव च ॥
इन्धनानि च यो दद्याद्विप्रेभ्यः शिशिरागमे ।
स सुखी दीप्तकायाग्निः सुभगश्चैव जायते ॥
गृहदाता सुखी प्राज्ञो वितृप्तः सर्ववस्तुषु ।
अन्नदस्तु भवेद्धीमान् सुतृप्तः कीर्तिमानपि ॥
तैलमामलकं यच्छन् पादाभ्यङ्गं तथैव च ।
नरः सुतृप्तस्तेजस्वी सुखवांश्चैव जायते ॥

तथा

ताम्बूलश्चैव यो दद्याद्ब्राह्मणेभ्यो विचक्षणः ।
मेधावी सुभगः प्राज्ञो दर्शनीयश्च जायते ॥
गुडमिक्षुरसं चैव लवणं व्यञ्जनानि च ।
सुरभीणि च पानानि दत्वाऽत्यन्तं सुखी भवेत् ॥

वायुपुराणे

चन्दनानां प्रदातारः शङ्खानां मौक्तिकस्य च ।
पापकर्तॄनपि पितॄंस्तारयन्ति तथा शुचिः ॥

बृहस्पतिः

असिपत्रमयं मार्गं क्षुरधारासमन्वितम् ।
तीक्ष्णातपश्च तरति छत्रोपानत्प्रदो नरः ॥

हारीतः[1]

अपो ददत् तृषमभिजयत्यात्मानं च निष्क्रीणाति। अन्नदानादसून् निष्क्रीणाति, अन्नवानन्नादोऽन्नपतिश्च भवति। वस्त्रप्रदानाद्रुचो निष्क्रीणाति, सुरूपोऽनग्नो वस्त्रभाग् भवति। हिरण्यप्रदानात्तेजो निष्क्रीणाति, सुतेजाः श्रीमान् हिरण्यभाग्भवति। गोप्रदानाद्वाचो निष्क्रीणाति, सुवाग्विपाप्मा गोभाक् च भवति। अनडुत्प्रदानात् प्राणान् निष्क्रीणाति, अरोगो बलवान् धुर्यभाग्भवति। रथप्रदानाच्छरीरं निष्क्रीणाति, भृत्यविविधविमानभाग्भवति। शय्याप्रदानात् सुखं निष्क्रीणाति, यानशयनासनविविधसुखभाग्भवति। अपरिमितप्रदानादपरिमितपोषं पुष्णाति, अपरिमितान् कामानवाप्नोति।

तद्विविधं भवति—अविज्ञातदानं विज्ञातदानं च। यदविज्ञातविदुषे ददाति तदविज्ञातदानम्। अथ यद्विज्ञातविदुषे सब्रह्मचारिणे वैश्वानरमाददानाय यद्ददाति प्रतिगृह्णाति वा तद्विज्ञातदानम्। तदप्येतद् यजुषोक्तम्—"क इदं कस्मा अदादि"ति।

'आत्मानं निष्क्रीणाति' आत्मानमेव ददाति इत्यर्थः। अनेन प्रकारेण जलादिदानमेव स्तूयते[2]।

1 हेमा. p. 158 : the entire passage is corrupt in the Mss., and is restored from हेमा.

2 This prose comment is reproduced verbatim by हेमा. p. 159

विष्णुः[1]

तैजसानां पात्राणां प्रदानेन पात्रीभवति। कामानां मधुघृततैलप्रदानेनाऽऽरोग्यमौषधप्रदानेन च। लवणप्रदानेन लावण्यम्। धान्यप्रदानेन तुष्टिः। सस्यदानेन च तथा। इन्धनप्रदानेन दीप्ताग्निर्भवति। सङ्ग्रामे [2]शश्वज्जयमाप्नोति। आसनदानेन स्थानम्। शय्यादानेन भार्य्याम्। उपानह्प्रदानेनाऽश्वतरीयुतं रथम्। छत्रप्रदानेन[3] स्वर्गम्। तालवृन्तचामरप्रदानेनाऽदुःखित्वम्। पुष्पप्रदानेन श्रीमान्[4] भवति। अनुलेपनदानेन कीर्तिमान् भवति। [5]धूपप्रदानादूर्ध्वगतिर्भवति।

यमः

देवतापुष्पदानेन जायते श्रीसमन्वितः।
ऊर्ध्वां गतिमवाप्नोति यश्च धूपप्रदो नरः॥
लोके प्रकाशो भवति चक्षुष्मानपि दीपतः।
गन्धौषधमथाभ्यङ्गं माक्षिकं लवणं तथा[6]॥
यः प्रयच्छति विप्राय सौभाग्यं स तु विन्दति॥

1 हेमा. p. 159
2 *Ibid*, सज्जयं
3 हेमा. p. 259 reads क्षेत्रप्रदानेन
4 *Ibid*, ज्यायान् for श्रीमान्
5 Last clause omitted in हेमा.
6 हेमा. p. 162

महाभारते

पुष्पोपगन्धोऽथ फलोपगन्धो
य: पादपं स्पर्शयते द्विजोऽत्र ।
सस्त्रीसमृद्धं बहुरत्नपूर्णं
लभेदयं लोपगतं गृहं वै ॥

प्रपाश्च कार्या दानार्थं नित्यं तु द्विजसत्तम ।
भुक्तेऽप्यथ प्रदेयं तु पानीयं वै विशेषत: ॥
निदाघकाले पानीयं यस्य तिष्ठत्यबाधितम्[1] ।
स दुर्गविषमं कृच्छ्रं न कदाचिदवाप्नुयात् ॥

स्कन्दपुराणे

सुगन्धशीतलाश्चाऽपो रसैर्दिव्यैः समन्विताः ।
यः प्रयच्छति विप्रेभ्यस्तस्य दानफलं शृणु ॥
विमानं सूर्यसङ्काशमप्सरोगणसेवितम् ।
सोऽधिरुह्य दिवं याति वरुणस्य सलोकताम् ॥
भाजनं यः प्रयच्छेत्तु हैमं वनविभूषितम् ।
सोऽप्सरश्शतसमाकीर्णे विमाने दिवि मोदते ॥
राजतं यः प्रयच्छेत्तु विप्रेभ्यो भाजनं शुभम् ।
स गन्धर्वपदं प्राप्य उर्वश्या सह मोदते ॥
ताम्रं यो भाजनं दद्यात् ब्राह्मणेभ्यो विशेषतः ।
स भवेद्यक्षराजस्य [2]यक्षोबलसमन्वितः ॥
आसनं यः प्रयच्छेत्तु सम्वीतं ब्राह्मणाय वै ।

1 I. O., अबाधितम् ; Udaipur Ms. reads : अराविनम्

2 I. O., यशोबल

स राज्यस्थानमाप्नोति सदा निर्मुक्तविज्वरः ॥

'सम्वीतं' वस्त्रादिवेष्टितम् ।

अश्वं यस्तु प्रयच्छेत्तु हेमचित्रं सुलक्षणम् ।
स तेन कर्मणा दिव्यं गान्धर्वं लोकमश्नुते ॥

'हेमचित्रं' सुवर्णतिलकोपेतम् ।

रथमश्वं गजं दासीं कन्यां गृहमथाऽपि वा ।
भूमिं च यः प्रयच्छेत्तु स राजा भुवि जायते ॥

कालिकापुराणे

शिवादिदेवतागारे यतीनामाश्रमेषु च ।
अग्निहोत्रक्षये चैव तथैव च प्रतिश्रये ॥
सर्वत्र शङ्करः साक्षाद्वसतीति विचिन्त्य च ।
सततं दीपकान् दद्याच्छ्रोत्रियाणां गृहे गृहे[1] ॥
अभ्यङ्गमिन्धनं नीरं शयनासनमेव च[2] ।
दद्याद्गवाह्निकं[3] चैव तमुद्दिश्य दिने दिने ॥
कायिनामन्नदानं तु तमुद्दिश्य दिने दिने ।
अथवा किं प्रलापेन यत्किञ्चित् सुकृतं भुवि ॥
कुर्वंस्तत्पदमाप्नोति शिवमुद्दिश्य लीलया ।
लीलया क्षपयेद्देहे शङ्कराय शरीरभाक् ॥

'क्षये' गृहे । 'तं' शङ्करम् । 'कायिनां' शरीरिणाम् ।

1 These two ślokas are not found in हेमा. p. 164

2 हेमा. p. 164

3 *Ibid*, दद्याच्च वाह्निकं

देवीपुराणे[1]

विद्याधर उवाच

कानि कानि च दानानि देयानि मुनिसत्तम।
कानि पात्राणि देशो वा कालो द्रव्यं विधिश्च कः॥
तान्यहं श्रोतुमिच्छामि कथयस्व प्रसादतः॥

मनुरुवाच

न्यायतो यान्यवाप्तानि शाकान्यपि नृपोत्तम।
तानि देयानि देव्यास्तु कन्यकां योषितां सदा॥
तद्भक्तेषु च विप्रेषु अपरेषु च नित्यशः।
विप्रेषु प्रावृषे वत्स देवी कामान् प्रयच्छति॥
देशं नदो गयाशैलं गङ्गानर्मदपुष्करम्।
वाराणसी कुरुक्षेत्रं प्रयागं जम्बुकेश्वरम्॥
केदारं भीमनादं च दण्डकं पुष्कराह्वयम्।
सोमेश्वरं महापुण्यं तथा चाऽमरकण्टकम्॥
कालिञ्जरं तथा विन्ध्यं यत्र वासो गृहस्य च[2]।
द्रव्यं भूधेनुगोधान्यं तिलवस्त्रघृतादिकम्[3]॥
विधिना चोपवासेन एकान्नो नक्तभोजनात्।
शुचिना भावपूतेन क्षान्त्या सत्यव्रतादिना॥
अपि सर्षपमात्रस्य दातारं तारयेन्नृप।
किं पुनर्विधिना वत्स देवीमुद्दिश्य प्रावृषि॥

1 हेमा. p. 164
2 These six ślokas are not found in हेमा।
3 हेमा. 164

विप्रेषु विप्रकन्यासु तिलाज्यं सम्प्रयच्छति ।
तस्य सा तुष्यते देवी अचिरेण नराधिप ॥

आदित्यपुराणे

सुगन्धिचित्राभरणोपशोभितं
यस्त्वासनं वेदविदे प्रदद्यात् ।
ग्रामाधिपत्यं लभते स शीघ्रं
कुले महत्वं लभते समग्रम् ॥

वस्त्रवह्निप्रदानेन ब्रह्मलोकं प्रपद्यते ।
धर्मशास्त्रप्रदातारः सत्त्रदानरताश्च ये[1] ॥
तीर्थे तडागकूपादिनौकासेतुप्रदाश्च ये ।
स्कन्धेन तारयेद्यस्तु तृषार्तानां जलप्रदः ॥
पक्वान्ददाति केदारान् सफलांश्चैव पादपान् ।
षष्टिं कोटिसहस्राणि अर्बुदानां च वै त्रयम् ॥
क्रीडन्ति ते स्वर्गलोके एतदुक्तं द्विजोत्तम ।
यष्टिं ये तु प्रयच्छन्ति नेत्रहीने सुदुर्बले ॥
तेषां तु विपुलः पन्थाः फलमूलोपशोभितः ।
निदाघकाले वर्षासु यच्छत्रं तु प्रयच्छति[2] ॥
नाऽन्यः कश्चिन्मनोदाहः कदाचिदपि जायते ।
यो ददाति घटीपात्रं दान्तकां करकं तथा ॥
तृषार्तस्य तथा घर्मे लभते शीतलं जलम् ।

1 हेमा. p. 163 gives three ślokas from this on.

2 I. O., gives the clause: Udaipur Ms. and A. S. B. read, पवित्रं प्रतिपादयेत्

योगिनां च दरिद्राणां ये तु वस्त्रप्रदा नराः ॥
तेषां दिव्यानि वस्त्राणि सुगन्धीनि मृदूनि च ।
वाताश्चैव प्रवहन्ति सुगन्धाश्चाऽमृतोपमाः[1] ॥
अश्वं वा यदि वा युग्यं शोभने वाऽथ पादुके[2] ।
ददाति यः प्रदानं वै ब्राह्मणेभ्यः सुसंयतः ॥
तेषां दिव्यानि यानानि रथध्वजपताकिनः ।
दुष्टः पन्था न चैवेह भविष्यति कथञ्चन ॥
क्षौमजं वाऽथ कार्पासं पट्टसूत्रमथाऽपि वा ।
दद्याद्यज्ञोपवीतं च तं न हिंसन्ति वायसाः ॥
अन्नपानाश्वगोवस्त्रशय्यादानानि वा पुनः[3] ।
प्रेतलोके प्रशस्तानि दानान्यष्टौ विशेषतः ॥

महाभारते

प्रदानं सर्वदानेभ्यः शकटस्य विशिष्यते ।
एवमाह महाभागः शाण्डिल्यो भगवानृषिः ॥
उपानहौ प्रयत्नाद्यः ब्राह्मणेभ्यः प्रयच्छति ।
मर्दते कंटकान् सर्वान् विषमान् सन्तरत्यपि ॥
शकटं सस्यसंयुक्तं दत्तं भवति चैव हि ।
'कंटकान्' द्वेषिणः ।

नन्दिपुराणे

अलङ्कारं तु यो दद्याद्ब्राह्मणाय सुराय वा ।

1 These nine lines are omitted by हेमा

2 हेमा. p. 164

3 Last quarter from I. O.

स गच्छेद्वारुणं लोकं नानाभरणभूषितः[1] ॥

जातः पृथिव्यां कालेन भवेद्द्वीपपतिर्नरः ।
यज्ञोपवीतदानेन सुरेभ्यो ब्राह्मणाय च ॥

भवेद्विप्रश्चतुर्वेदः शुभविन्नाऽत्र संशयः ।
उष्णीषदायी यो मर्त्यो जायते मुकुटोत्कटः ॥

विस्तीर्णराजवंशो तु सितवृत्तः सलक्ष्मवान् ।
यो गीतवाद्यं दद्यात्तु ब्राह्मणाय सुबुद्धिमान् ॥
स गन्धर्वपुरं गच्छेत् वसेत्तत्र युगत्रयम् ॥

तथा

योऽपि कश्चित्तृषार्त्तानां जलपानं प्रयच्छति ।
स नित्यतुष्टो वसति स्वर्गे युगशतं नरः ॥

याज्ञवल्क्यः[2]

यस्य यस्य भवेदर्थी तस्य तस्य प्रदानतः ।
तृणकाष्ठसमेऽप्यर्थे गोप्रदानफलं लभेत् ॥

विष्णुः

यद्यदिष्टतमं लोके यच्चाऽन्यदपि तद्गृहे ।

1 I. O., gives this line and A. S. B. adds the following :

गोप्रदानेन तु स्वर्गं लभते निर्मलं नरः ।
अश्वदानेन पुण्याहं कन्यादानेन मङ्गलम् ॥
द्विजेभ्यः तर्पणं कृत्वा दत्वा वस्त्राणि भक्तितः ।
स्ववस्तु लभते स्वर्गं यत्र गत्वा न शोचति ॥

2 Not traceable

तत्तद्गुणवते देयं तदेवाऽक्षयमिच्छता ॥

नरसिंहपुराणे[1]

एकविंशत्यमी स्वर्गा निविष्टा मेरुमूर्द्धनि ।
अहिंसादानकर्त्तारो यज्ञानां तपसां तथा ॥
एतेषु निवसन्ति स्म जनाः क्रोधविवर्जिताः ।

'एकविंशतिस्वर्गा' अनन्तरं वक्ष्यमाणा आनन्दप्रभृतयः ।

जलप्रवेशे चाऽऽनन्दं प्रमोदं वह्निसाहसे ।
भृगुप्रपाते सौख्यं च रणं चैवाऽस्य निर्मलम् ॥
अनशनेन मृतो यः स्यात् स गच्छेत्तु त्रिविष्टपम्[2] ।
क्रतुयाजी नाकपृष्ठमग्निहोत्री च निर्वृतिम् ॥

'क्रतुयाजी' सोमयागकर्त्ता ।

तडागकूपकर्त्ता च लभते पौष्टिकं द्विजः ।
सुवर्णदायी सौभाग्यं लभते सुमहातपाः[3] ॥
शीतकाले महावह्निं प्रज्वालयति यो नरः ।

1 हेमा. pp. 172–3, reproduces even the prose explanations. नर. पु. (*ed.* Gopalanarayan.) अ. ३०, श्लो- 27 ff.

स्वर्गाश्चैव द्विजश्रेष्ठ पूर्वश्रृङ्गे समास्थिताः ।
एकविंशानि स्वर्गा वै निविष्टा मेरुमूर्द्धनि ॥

2 नर. पु. p. 98 : अनाशके तु संन्यासे मृतो गच्छेत्त्रिविष्टपम्

3 नर. पु. p. 98 : सुवर्णदायी सौभाग्यं लभन् स्वर्गतपः फलम्

सर्वसत्त्वहितार्थाय स स्वर्गं साप्सरं[1] लभेत् ॥
हिरण्यगोप्रदानेन निरहङ्कारमाप्नुयात् ।
भूदानेन तु शुद्धेन लभते शान्तिकं पदम् ॥
गोप्रदानेन[2] स्वर्गं तु निर्मलं लभते नरः[3] ।
अश्वदानेन पुण्याहं कन्यादानेन मङ्गलम् ॥
द्विज्येभ्यस्तर्पणं कृत्वा दत्वा वस्त्राणि शक्तितः ।
श्वेतं तु लभते स्वर्गं यत्र गत्वा न शोचति[4] ॥
कपिलागोप्रदानेन परमार्थे महीयते[5] ।
एकान्नभोजी[6] यो मर्त्यो नक्तभोजी च नित्यशः ॥
उपवासैस्त्रिरात्राद्यैः [7]श्रान्तः स्वर्गे सुखं लभेत् ।
'एकान्नभोजी' एकभक्तव्रतः ।
सरित्स्नायी जितक्रोधो ब्रह्मचारी दृढव्रतः ॥

1 हेमा. p. 173, स्वर्गं साप्सरसं लभेत्

2 नर. पु. p. 98 रौप्यदानेन for गोप्रदानेन, which is preferable as गोदान comes later.

3 I. O. and हेमा. p. 173

4 Three lines omitted by Udaipur Ms. and A. S. B.

5 नर. पु. p. 98 has the following five lines after this :

गोवृषस्य प्रदानेन स्वर्गं मन्मथमाप्नुयात् ।
माघमासे सरित्स्नायी तिलधेनुप्रदस्तथा ॥
छत्रोपानहदाता च स्वर्गं जात्युभशोभनम् ।
देवतायतनं कृत्वा द्विजशुश्रूषकस्तथा ॥
तीर्थयात्रापरश्चैव स्वर्गराजे महीयते ।

6 Udaipur Ms. reads एकान्त

7 नर. पु. p. 98 : शान्तः स्वर्गे शुभं लभेत्

निर्मलं स्वर्गमाप्नोति तथा भूतहिते रतः ।
विद्यादानेन मेधावी निरहङ्कारमाप्नुयात् ॥
येन येन हि भावेन यद्यद्दानं प्रयच्छति ।
तत्तत्स्वर्गमवाप्नोति यद्यदिच्छति मानवः[1] ॥
यस्तु[2] सर्वाणि दानानि ब्राह्मणेभ्यः प्रयच्छति ।
सम्प्राप्य न निवर्तेत दिवं शान्तमनामयम् ॥

महाभारते

याज्यतः शिष्यतो वाऽपि कन्यया वा धनं सह ।
यद्यागच्छेद्यजेद्दद्यान्नैकोऽश्नीयात् कथश्चन ॥
गृहमावसतो ह्यस्य नाऽन्यत्तीर्थं परिग्रहे ।
देवर्षिपितृगुर्वादीन् वृद्धातुरबुभुक्षितान् ॥

'नान्यत्तीर्थ' मिति । वक्ष्यमाणदेवर्षिपितृगुर्वादिभ्यो नाऽन्यत्प्रकृष्टं दान ( पात्र ) मित्यर्थः । 'परिग्रहे' धनार्जने ।

अन्तर्हिताभितृप्तानां यथाशक्ति बुभुक्षिताम् ।
द्रव्याणामपि शक्त्याऽपि देयमेषां कृतात्मनाम् ॥
अर्हतामनुरूपाणां नाऽदेयं ह्यस्ति किश्चन[3] ।

1 S'loka omitted by हेमा.

2 हेमा. p. 174; नर. पु. p. 98 : gives three lines before संप्राप्य न निवर्तेत :

चत्वारि अतिदानानि कन्या गौर्भूः सरस्वती ।
नरकादुद्धरन्त्येते जपवाहनदोहनात् ॥
यस्तु सर्वाणि दानानि ब्राह्मणेभ्यः प्रयच्छति ।

3 हेमा. p. 11

उच्चैःश्रवसमप्यश्वं प्रापणीयं सतां विदुः ॥
अनुनीय यथाकामं सत्यसन्धो महाव्रतः ।
स्वैः प्राणैर्ब्राह्मणः प्राणान् परित्राय दिवं गतः ॥
रन्तिदेवश्च सांकृत्यो वसिष्ठाय महात्मने ।
अपः प्रदाय शीताश्च नाकपृष्ठमितो गतः ॥
आत्रेयचन्द्रदमयोरर्हतोर्विविधं धनम्[1] ।
दत्वा लोकान्ययौ धीमाननन्तान् स महीपतिः ॥
शिबिरौशीनरोऽङ्गानि पुत्रं च प्रियमौरसम् ।
ब्राह्मणार्थमुपाकृत्य नाकपृष्ठमुपागतः ॥
प्रतर्दनः काशिपतिः प्रदाय नयने स्वके ।
ब्राह्मणायाऽतुलां कीर्तिमिह चाऽमुत्र चाऽश्नुते ॥
दिव्यं मृष्टशलाकं तु सौवर्णं परमर्द्धि तत् ।
छत्रं देवमृधो दत्वा सराष्ट्रोऽभ्यपतद्दिवम् ॥

'मृष्टशलाकं' उज्वलपञ्जरम्[2] ।

संकृतिश्च तथाऽऽत्रेयः शिष्येभ्यो ब्रह्म निर्गुणम् ।
उपदिश्य महातेजा गतो लोकाननुत्तमान् ॥
अम्बरीषो गवीर्दत्वा ब्राह्मणेभ्यः प्रतापवान् ।
अर्बुदानि दशैकं च सराष्ट्रोऽभ्यपतद्दिवम् ॥
सावित्री कुण्डले दिव्ये शरीरं जनमेजयः[3] ।

1 हेमा. p. II, विधिवद्धनं

2 Comment reproduced by हेमा. p. 11

3 हेमा. p. 12 interpolates here रम्यमावसथं चैव दत्त्वाऽमुं लोकमास्थितः ।

ब्राह्मणार्थे परित्यज्य जग्मतुर्ल्लोकमुत्तमम् ॥
सर्वरत्नं वृषादर्भो युवनाश्वः प्रियाः स्त्रियः ।
रम्यमावसथं चैव दत्वा स्वर्लोकमास्थितः ॥
निमी राष्ट्रं च वैदेहो जामदग्न्यो वसुन्धराम् ।
ब्राह्मणेभ्यो ददौ चाऽपि यशश्चोर्वी सपत्तनाम् ॥
अवर्षति च पर्जन्ये सर्वभूतानि चाऽसकृत् ।
वसिष्ठो जीवयामास प्रजापतिरिव प्रजाः[1] ॥
कबन्धमस्य पुत्रस्तु मरुत्तो नृपतिस्तथा ।
कन्यामङ्गिरसे दत्वा दिवमाशु जगाम ह ॥
ब्रह्मदत्तस्य पश्चास्यो राजा बुद्धिमतां वरः ।
निधिं शङ्खं द्विजातिभ्यो दत्वा लोकानवाप्तवान् ॥
राजा मित्रसहश्चाऽपि[2] वसिष्ठाय महात्मने ।
मदयन्तीं प्रियां दत्वा तया सह दिवं गतः ॥
सहस्रजिच्च राजर्षिः प्राणानिष्टान् महायशाः ।
ब्राह्मणार्थे परित्यज्य गतो लोकाननुत्तमान् ॥
सर्वकामैश्च सम्पूर्णं दत्वा वेश्म हिरण्मयम् ।
मुकुन्ताय[3] गतः स्वर्गं शतद्युम्नो महामतिः ॥
नाम्ना च द्युतिमान्नाम शाल्वराजः प्रतापवान् ।
दत्वा राज्यमृचीकाय गतो लोकाननुत्तमान् ॥
मदिराश्वश्च राजर्षिर्दत्वा कन्यां सुमध्यमाम् ।

1 हेमाद्रि does not give the following five lines.

2 हेमा. p. 12, मित्रसहस्रश्च

3 *Ibid*, मुद्गलाय

सुवर्णहस्ताय गतो लोकान् देवैरभिष्टुतान् ॥
लोमपादश्च राजर्षिः शान्तां[1] दत्वा सुतां प्रभुः ।
ऋष्यशृङ्गाय विपुलैः सर्वैः कामैरयुज्यत ॥
दत्वा शतसहस्रं तु गवां राजा प्रसेनजित् ।
सवत्सानां महातेजा गतो लोकाननुत्तमान् ॥
एते चाऽन्ये च बहवो दानेन तपसा सह ।
महात्मानो गताः स्वर्गं शिष्टात्मानो जितेन्द्रियाः ॥
तेषां प्रतिष्ठिता कीर्तिर्यावत्तिष्ठति मेदिनी ।
दानयज्ञप्रजासर्गैरेके हि दिवमाप्नुयुः ॥

तथा

वस्त्राभरणदातारो भक्तपानान्नदास्तथा[2] ।
कुटुम्बानां च दातारः[3] पुरुषाः स्वर्गगामिनः ॥
सहस्रपरिवेष्टारः तथैव च सहस्रदाः ।
दातारश्च[4] सहस्राणां ते नराः स्वर्गगामिनः ॥
सुवर्णस्य च दातारो गवां च भरतर्षभ ।
यानानां च प्रदातारस्ते नराः स्वर्गगामिनः ॥
वैवाहिकानां प्रेषाणां दीनानां च युधिष्ठिर ।
दातारो वाससां चैव पुरुषाः स्वर्गगामिनः ॥

1 हेमा. p. 12, स तां
2 हेमा. p. 171
3 *Ibid*, कुटुम्बान्नप्रदातारः
4 *Ibid*, त्रातारश्च

भयाच्छापात्तथा[1] बाधाद्दारिद्र्याद्व्याधिधर्षणात् ।
यत्कृते प्रतिमुञ्चेत ते नराः स्वर्गगामिनः ॥
विहारावसथोद्यानकूपारामसभाप्रदाः ।
प्रपाणां चैव कर्तारस्ते नराः स्वर्गगामिनः ॥
शुश्रूषाभिस्तपोभिश्च [2]ततमादाय भारत ।
ये प्रतिग्रहनिस्स्नेहाः ते नराः स्वर्गगामिनः ॥
सर्वहिंसानिवृत्ताश्च नराः सर्वसहाश्च ये ।
सर्वस्याऽऽश्रयभूताश्च ते नराः स्वर्गगामिनः ॥
आढ्याश्च बलवन्तश्च यौवनस्थाश्च भारत ।
ये वै जितेन्द्रिया धीरास्ते नराः स्वर्गगामिनः ॥
उपकारिषु सस्नेहा मृदवः स्नेहवत्सलाः ।
स्वाबाधाः सुप्रसाधाश्च पुरुषाः स्वर्गगामिनः ॥

इति श्रीलक्ष्मीधरविरचिते कृत्यकल्पतरौ
दानकाण्डे प्रकीर्णकदानानि[3] ।

1 हेमा p. 173, नयेत्पातात्ततथा

2 *Ibid*, कृतं

3 I. O.

## २०

# अथ कूपवापीतडागविधिः

तत्र यमः[1]

कूपारामप्रपाकारी तथा वृक्षावरोपकः ।
कन्याप्रदः सेतुकारी स्वर्गमाप्नोत्यसंशयः ॥

तडागे यस्य पानीयं सततं खलु तिष्ठति ।
स्वर्गलोके गतिस्तस्य नाऽत्र कार्या विचारणा[2] ॥

येषां तडागानि शुभाः प्रपाश्च
आरामकूपाश्च प्रतिष्ठिताश्च[3] ।
अनुप्रदानं मधुरा च वाणी
तेषामयं चैव परश्च लोकः ॥

आदित्यपुराणे[4]

सेतुबन्धरता ये च तीर्थे शौचरताश्च ये ।
तडागकूपकर्त्तारो मुच्यन्ते ते तृषाभयात् ॥

'तीर्थशौचरताः' जलावतरणमार्गसंस्कर्तारः ।

1 हेमा. p. 911
2 *Ibid*, p. 917
3 *Ibid*, p. 911, प्रतिश्रयाश्च and अन्नप्रदानं for अनुप्रदानम
4 हेमा. p. 915

विष्णुः[1]

अथ कूपकर्त्तुः

तत्प्रवृत्ते तु पानीये दुष्कृतार्धं विनश्यति ।
तडागकृन्नित्यतृप्तो वारुणं लोकमश्नुते ॥
जलप्रदः सदा तृप्तो भवति ।

'तत्प्रवृत्ते' तस्मात् कूपात् प्रवृत्ते ।

[2]वृक्षारोपयितुर्वृक्षाः परलोके पुत्रा भवन्ति । वृक्षप्रदस्य वृक्षाः [3]प्रसूनैर्देवान् प्रीणयन्ति । फलैश्चाऽतिथीन्, छाययाऽभ्यागतान् । देवे वर्षत्युदकेन पितॄन् [4]सेतुकृत् स्वर्गमाप्नोति ।

तथा[5]

कूपारामतडागेषु देवतायतनेषु च ।
पुनस्संस्कारकर्त्ता च लभते मौलिकं फलम् ॥

नन्दिपुराणे[6]

यो वापीमथवा कूपं देशे तोयविवर्जिते ।
खानयेत् स नरो याति स्वर्गे प्रेत्य शतं समाः ॥
देवैरेकत्वमतुलं तृष्णाक्षुद्भर्जितस्तथा ।

1 हेमा. p. 915

2 हेमा. p. 938

3 *Ibid*, प्रसूनैः; Udaipur Ms. reads प्रसूतेः

4 हेमा. p. 938 omits this clause.

5 हेमा. p. 915

6 हेमा. p. 915

तडागकर्त्ता वसति स्वर्गे युगचतुष्टयम् ॥
यत्र विप्रोऽथ गौरेका पायिनी सलिलं क्वचित् ।
तडागं तादृशं कृत्वा स्वर्गे दशयुगान् वसेत् ॥

तथा[1]

यो वापीमग्निसाक्ष्येण विधिवत् प्रतिपादयेत् ।
कोणेषूदककुम्भस्थान् समुद्रानर्च्य श्रद्धया ॥
चतुरश्चतुरन्ता तु तेन दत्ता मही भवेत् ।
तत्सन्निधौ द्विजानर्च्य विधिवत् पानभोजनैः ॥
स याति वारुणं लोकं दिव्यकामसमन्वितम् ।
वाप्यास्तीरे च यः कुर्यात् सच्छायं तरुपुत्रकम् ॥
तरुदानाद्दशगुणं वापीदानाच्चतुर्गुणम् ।
संयोगदानेन फलं लभते पुरुषः स वै ॥

स्कन्दपुराणे[2]

अवटं यो नरः कुर्यादपां पूर्णं सुशोभनम् ।
दद्याच्च[3] ब्राह्मणेभ्यस्तं भोजयित्वा यथाविधि ॥
अष्टाभिः सुविचित्राभिः पताकाभिरलङ्कृतम् ।
पितॄंस्तारयते पश्चात्तं[4] दत्वा तु नरोत्तमः ॥
यात्यप्सरस्सुगीतेन वरुणस्य सलोकताम् ॥

'अवटो'ऽत्र कूपः ।

1 हेमा. p. 917
2 हेमा. p. 915
3 A. S. B., दद्यात् सुब्राह्मणेभ्यः
4 हेमा. p. 915, पितॄंस्तरेत पश्चाशत्तं

मत्स्यपुराणे

मत्स्य उवाच

पुराणेष्वितिहासेषु पठ्यते राजसत्तम[1] ।
प्राप्य पक्षं शुभं शुक्लं अतीते चोत्तरायणे[2] ॥
पुण्येऽह्नि विप्रैः कथिते कृत्वा ब्राह्मणवाचनम् ।
प्रागुदक्प्रवणे देशे तडागस्य समीपतः ॥
चतुर्हस्तां शुभां वेदिं चतुरस्रां चतुर्मुखीम् ।
तथा षोडशहस्तस्स्यान्मण्डपश्च चतुर्मुखः ॥
वेद्याश्च परितो गर्त्ताऽरत्निमात्रा त्रिमेखला ।
नव सप्ताऽथवा पञ्च [3]योनिर्वक्रा नृपात्मज ॥
वितस्तिमात्रा योनिः स्यात् षट्सप्ताङ्गुलविस्तृता ।
गर्त्ताश्च तत्र सप्त[4] स्युस्त्रिपर्वोच्छ्रितमेखलाः ॥
सर्वतः सर्ववर्णाः स्युः पताकाध्वजसंयुताः ।
अश्वत्थोदुम्बरप्लक्षवटशाखाकृतानि तु ॥
मण्डपस्य प्रतिदिशं द्वाराण्येतानि कारयेत् ।
शुभास्तत्राऽष्ट होतारो द्वारपालास्तथाऽष्ट वै ॥
अष्टौ तु जापकाः कार्या ब्राह्मणा वेदपारगाः ।
सर्वलक्षणसम्पूर्णा[5] मन्त्रवन्तो जितेन्द्रियाः ॥

1 Supplied by I. O.

2 हेमा. p. 926: I. O. and हेमा. correct the last quarter.

3 हेमा. p. 927, योनिर्वक्त्रात्

4 हेमा. p. 927, शस्तास्स्युः

5 हेमा. p. 927, संपन्नाः

कुलशीलसमायुक्ताः स्थापकास्स्युर्द्विजोत्तमाः ॥

गर्त्तादिपरिमाणं, ऋत्विजां च सर्वलक्षणानि, तुलापुरुषेऽभिहितानि[1] । 'स्थापकाः' आचार्याः ।

प्रतिगर्त्ते तु कलशाः यज्ञोपकरणानि च[2] ।
व्यजनं चाऽऽसनं शुद्धं ताम्रपात्रे सुविस्तरे[3] ॥
ततस्त्वनेकवर्णाः स्युर्वलयः प्रतिदैवतम् ।
आचार्यः प्रक्षिपेद्भूमौ अभिमन्त्र्य विचक्षणः ॥
त्र्यरत्निमात्रो यूपः स्यात् क्षीरवृक्षविनिर्मितः ।
यजमानप्रमाणो वा संस्थाप्यो भूतिमिच्छता ॥
हेमालङ्कारिणः कार्याः पञ्चविंशतिऋत्विजः ।
कुण्डलानि च हैमानि केयूरकटकानि च ॥

1 See *infra* p. 51

2 हेमा. p. 927 (वास्तुपूजा) हेमा. comments as follows :
पुण्येऽह्नि शुभलग्नादौ ब्राह्मणानां वाचनं परिभाषायां द्रष्टव्यम् । तत्रोत्सर्गपूर्वदिवसे 'श्वस्तडागाद्युत्सर्गं करिष्य' इति विहितसङ्कल्पो यजमानो वृद्धिश्राद्धमाभ्युदयिकं विधाय ब्राह्मणवाचनं कुर्यात् । वास्तुपूजा चाऽत्र कर्तव्या । यतस्तदकरणे मत्स्यपुराणे दोषः श्रूयते—'वास्तुपूजामकुर्वाणोऽतथ्याहारो भविष्यति' इति । तत्प्रकारस्तु गृहदाने दर्शितः । हस्तादिलक्षणमुक्तं परिभाषायाम् । 'गर्त्ताः' कुण्डानि । तानि च चतसृषु दिक्षु चत्वारि, ऐशान्यां पञ्चममाचार्यकुण्डमिति पञ्च कुर्यात् । पताकास्तु प्राच्यादिप्रदक्षिणदिग्विदिक्षु पीतरक्तनीलाञ्जननिभशुक्लकृष्णहरितसर्ववर्णाः कार्याः । ध्वजस्तु किङ्किणीजालालङ्कृतः । आचार्यप्रमुखान् पञ्चविंशतिब्राह्मणान् 'अमुकोत्सर्गयज्ञेनाऽहं यक्ष्ये, तत्र मे त्वमृत्विग्भव' इत्यादि वृत्वा मधुपर्केणाऽर्चयेत् ।

3 *Ibid*, सुविष्टरे

तथाङ्गुलीपवित्राणि वासांसि विविधानि च ।
दक्षयेच्च समं सर्वानाचार्यं द्विगुणं पुनः ॥

दद्याच्छयनसंयुक्तमात्मनश्चाऽपि यत् प्रियम् ।
सौवर्णौ कूर्ममकरौ राजतौ मत्स्यडुण्डुभौ ॥

ताम्रौ कुलीरमण्डूकौ वायसः शिंशुमारकः ।
एवमासाद्य तान् सर्वानादावेव विशाम्पते ॥

'आदौ' प्रथमम् ।

शुक्लमाल्याम्बरधरः शुक्लगन्धानुलेपनः ।
सर्वौषध्युदकस्नानस्नापितो वेदपुङ्गवैः ॥

यजमानः सपत्नीकः पुत्रपौत्रसमन्वितः ।
पश्चिमं द्वारमाश्रित्य प्रविशेद्यागमण्डपम् ॥

ततो मङ्गलशब्देन भेरीणां निःस्वनेन च[1] ।
रजसा मण्डलं कुर्यात् पञ्चवर्णेन तत्ववित् ॥
षोडशारं ततश्चक्रं पद्मगर्भं चतुर्मुखम् ।

1 हेमा. p. 928 comments thus: 'प्रतिगर्ते'त्यादि । प्रतिकुण्डमासनद्वयं ताम्रपात्रद्वयं विष्टरद्वयं व्यञ्जनं वस्त्रं स्रुवः स्रक्चन्दनादिभूषितं पञ्चरत्नगर्भं कलशं च स्थापयेत् । 'यज्ञोपकरणानि' पवित्रं पवित्रच्छेदनप्रोक्षणीपात्रप्रणीतापात्रस्थालीस्रुक्स्रुवेध्माबर्हिस्समिदाज्यप्रभृतीनि तथा स्थापयिष्यमाणदेवतार्थं बलीन् नानावर्णगन्धधूपदीपमाल्यानि क्षीरवृक्षनिर्मितं यूपं चोपकल्पयेत् । तं च यूपं देवताबलिहरणानन्तरं पूर्वकुण्डात् प्राच्यां दिशि दर्भानक्षतानि चाऽवटे प्रक्षिप्य निखनेत् । 'डुण्डुभो' राजिलः । 'कुलीरः' कर्कटकः । कूर्मादींश्च पञ्चरत्नगर्भायां सुवर्णपात्र्यां निक्षिप्य स्थापयेत् । एवमन्यदपि प्रकृतोपयोगि कर्मारम्भात् पूर्वमेवाऽऽसादयेत् । सर्वौषध्यः परिभाषायां दर्शिताः ।

चतुरस्रं च परितो वृत्तं मध्ये सुशोभनम् ॥
वेद्याश्चोपरि तत्कृत्वा ग्रहान् लोकपतींस्तथा ।
विन्यसेन्मन्त्रतः सर्वान् प्रतिदिक्षु विचक्षणः ॥
झषादीन् स्थापयेन्मध्ये वारुणं मन्त्रमाश्रितः ।
ब्रह्माणं च शिवं विष्णुं तत्रैव स्थापयेद्बुधः ॥

'झषादीन्' मकरादीन् ।

विनायकं च विन्यस्य कमलामम्बिकां तथा ।
शान्त्यर्थं सर्वलोकानां भूतग्रामं न्यसेत्ततः ॥
पुष्पभक्ष्यफलैर्युक्तमेवं कृत्वाऽधिवासयेत् ।
कुम्भांश्च रत्नगर्भांस्तान् वासोभिरभिवेष्ट्य च ॥
पुष्पगन्धैरलङ्कृत्य द्वारपालान् समन्ततः ।
पठध्वमिति[1] तान् ब्रूयादाचार्यस्त्वभिपूजयेत् ॥
बह्वृचौ पूर्वतः स्थाप्यौ दक्षिणेन यजुर्विदौ ।
सामगौ पश्चिमे स्थाप्यौ उत्तरेण त्वथर्विणौ[2] ॥
उदङ्मुखो दक्षिणतो यजमान उपाविशेत्[3] ।
यजध्वमिति तान् ब्रूयाद्धोतृकान् पुनरेव च ॥
उत्कृष्टमन्त्रजप्येन तिष्ठध्वमिति जापकान् ।
एवमादिश्य तान् सर्वान् प्रयुज्याऽग्निं स मन्त्रवित् ॥
जुहुयाद्वारुणैर्मन्त्रैराज्यं च समिधस्तथा ।
ऋत्विग्भिश्चैव होतव्या वारुणैरेव सर्वशः ॥

1 I. O., यजध्वं
2 I. O., अथर्वणौ
3 हेमा. p. 929

ग्रहेभ्यो विधिवद्धुत्वा तथेन्द्रायेश्वराय च ।
मरुद्भ्यो लोकपालेभ्यो विधिवद्विश्वकर्मणे[1] ॥
रात्रिसूक्तं च रौद्रं च पावमानं सुमङ्गलम् ।
जपेरन् पौरुषं सूक्तं पूर्वतो [2]बह्वृचाः पृथक् ॥

'रात्रिसूक्तं' "रात्री व्यख्यदायती" इति । 'रौद्रसूक्तं' "इमा रुद्राये"त्यादि । 'पावमानं' "नृपे"त्यादि(?) । 'सुमङ्गलं सूक्तं' "कनिक्रदज्जनुष" मित्यादि । 'पौरुषं' "सहस्रशीर्षे"त्यादि ।

शाक्रं रौद्रं च सौम्यं च कौष्माण्डं जातवेदसम् ।
सौरसूक्तं जपेरंस्ते दक्षिणेन यजुर्विदः ॥

'शाक्रं सूक्तं' "इन्द्रं वो विश्वतस्परी"त्यनुवाके "हुवे नु-शाक्र"मिति शाक्रलिङ्गकम् । 'रौद्रं सूक्तं' "इमा रुद्राय स्थिरधन्वन" इति षडृचः । 'सौम्यं सूक्तं' "सोमो धेनु"मिति षडृचः । 'कौष्माण्डसूक्तं' "यद्देवा देवहेडनमि"ति चत्वारोऽनुवाकाः । 'जातवेदसं सूक्तं' "यस्त्वा हृदा कीरिणे" त्यनुवाकः । 'सौरसूक्तं' "सूर्यो देवी"मिति षडृचः । एतानि सूक्तानि तैत्तिरीयाणां प्रसिद्धानि[3] ।

वैराजं पौरुषं सूक्तं सौपर्णं रुद्रसंहितम् ।
शैशवं पञ्चनिधनं गायत्रं ज्येष्ठसाम च ॥

1 हेमा. p. 930

2 हेमा. p. 930, जुहुयात्

3 Reproduced verbatim by हेमा. p. 930

वामदेव्यं बृहत् सौम्यं रौरवं सरथन्तरम् ।
गवांव्रतं विकर्णं च रक्षोघ्नं च यशस्तथा ॥
गायन्ति सामगा राजन् पश्चिमद्वारमाश्रिताः ।

'वैराजं' "पिबा सोममिन्द्रे"ति प्रसिद्धम् । 'पौरुषं सूक्तं' "सहस्रशीर्षे"त्यत्रोत्पन्नम् । 'सौपर्णानि' "उद्वेद विश्रुतामघ"मित्यत्र त्रीणि सामानि । 'रुद्रसंहिता' "सोमो राजान"मित्यादि प्रसिद्धा । 'शैशवं' "उच्चा ते जातमन्धस" इति । 'पञ्चनिधनं वामदेव्यं' "कया नश्चित्रे"ति प्रसिद्धम् । 'गायत्रं' "तत्सवितुरि"त्यादि । 'ज्येष्ठसाम'त्रीणि आज्यदोहानि । 'वामदेव्यं' ग्रामगेयम् । 'बृहत्' "त्वामिद्धि हवामह" इति प्रसिद्धम् । 'सौम्यं' "सोमव्रतं सन्ते पयांसी"ति । 'रौरवं' "पुनानः सोमे"त्यत्र प्रसिद्धम् । 'रथन्तरं' "अभि त्वा शूर नोनुम" इत्यत्र प्रसिद्धम् । 'गवांव्रतं' "तेमन्वतप्रथम"मिति द्वे सामनी । 'विकर्णं' "विभ्राडि"त्यत्र प्रसिद्धम् । 'रक्षोघ्नं' "अग्नेर्युक्तादी"त्यादि । 'यशः' "बृहदिन्द्राये" त्यत्र प्रसिद्धम्[1] ॥

आथर्वणाश्चोत्तरतः शान्तिकं पौष्टिकं तथा ।
जपेरन्मनसा देवमाश्रिता वरुणं प्रभुम् ॥
पूर्वेद्युरभितो रात्रावेवं कृत्वाऽधिवासनम् ।
मृदमादाय[2] कुम्भेषु प्रक्षिपेच्चत्वरात्तथा ॥
रोचनां च ससिद्धार्थान् गन्धान् गुग्गुलुमेव च ।

1 Reproduced verbatim by हेमा. p. 931

2 हेमा. p. 931, मृदमानीय कुण्डेषु

गजाश्वरथवल्मीकसङ्गमह्लदगोकुलात् ॥
स्नपनं तस्य कर्तव्यं पञ्चभङ्गसमन्वितैः ।
पूर्तकर्तुर्महामन्त्रैरेवं कृत्वा विधानतः ॥

'पञ्चभङ्गाः'

अश्वत्थोदुम्बरप्लक्षवटवेतसपल्लवाः[1] ।

एवं क्षपां समुद्वाह्य विधियुक्तेन कर्मणा ॥
ततः प्रभाते विमले सञ्जातेऽथ शतं गवाम् ।
ब्राह्मणेभ्यः प्रदातव्यमष्टषष्ट्यऽथवा पुनः ॥
पञ्चाशद्वाऽथ षट्त्रिंशत् पञ्चविंशति वा पुनः ।
ततः साम्वत्सरैः प्रोक्ते शुद्धे लग्ने सुशोभने ॥
वेदशब्दैः सगान्धर्वैर्वाद्यैश्च विविधैः शुभैः ।
कनकालङ्कृतां तत्र कृत्वा गामवतारयेत् ॥
सामगाय च सा देया ब्राह्मणाय विशाम्पते ।
पात्रीमादाय सौवर्णीं पञ्चरत्नसमन्विताम् ॥
ततो निक्षिप्य मकरं मत्स्यादीन् तांश्च सर्वशः ।
धृतां चतुर्भिर्विप्रैस्तु वेदवेदाङ्गपारगैः ॥
महानदीजलोपेतां दध्यक्षतविभूषिताम् ।
उत्तराभिमुखो न्युब्जं जलमध्ये तु कारयेत् ॥
आथर्वणेन साम्ना च "पुनर्मा"मित्यृचेन च ।
"आपो हिष्ठे"ति मन्त्रेण क्षिप्त्वाऽऽगत्य च मण्डपम् ॥

1 हेमा. p. 931, चूतस्य पल्लवाः

'आथर्वणं साम' "शन्नो देवीरभिष्टय" इत्यत्र प्रसिद्ध-मरण्ये गेयम् ।

तथा

पूजयित्वा सदस्यांस्तु बलिं दद्यात् समन्ततः ।
पुनर्दिनानि होतव्यं चत्वारि मुनिसत्तमाः ॥
चतुर्थीकर्म कर्तव्यं देया तत्राऽपि शक्तितः ।
दक्षिणा राजशार्दूल वरुणं संस्मरंस्ततः ॥
कृत्वा तु यज्ञपात्राणि यज्ञोपकरणानि च ।
ऋत्विग्भ्यस्तु समं दत्वा मण्डपं विभजेत् पुनः ॥
हैमपात्रीं[1] च शय्यां च स्थापकाय निवेदयेत् ।
ततः सहस्रं विप्राणामथवाऽष्टशतं तथा ॥
भोजयेच्च यथाशक्त्या पञ्चाशद्वाऽथ विंशतिम् ।
एवमेव पुराणेषु तडागविधिरुच्यते ॥
कूपवापीषु सर्वासु तथा पुष्करिणीषु च ।
एष एव विधिर्दृष्टः प्रतिष्ठासु तथैव च ॥
मन्त्रतस्तु विशेषः स्यात् [2]प्रासादोद्यानभूमिषु ।
अयं[3] त्वशक्तावर्द्धेन विधिर्दृष्टः स्वयंभुवा ॥
स्वल्पेष्वेकाग्निवत् कार्यो वित्तशाठ्यादृते नृभिः[4] ।

1 I. O., हैमपात्रीं and मेध्यां for शय्यां ; the two sets are wrongly joined.

2 I. O., आरामोद्यान

3 हेमा. p. 933, अयं च शक्तावर्धेन

4 I. O., शाठ्यादिवर्जनैः

प्रावृट्काले स्थितं तोयमग्निष्टोमसमं स्मृतम् ॥
शरत्कालस्थितं यत्स्यात् तदुक्तफलदायकम् ।
वाजपेयातिरात्राभ्यां हेमन्तशिशिरस्थितम् ॥
अश्वमेधसमं प्राहुर्वसन्तसमये स्थितम् ।
ग्रीष्मे च यत्स्थितं तोयं राजसूयाद्विशिष्यते ॥

एतान्महाराज विशेषधर्मान्
करोति उर्व्यामथ शुद्धबुद्धिः ।
स याति रुद्रालयमाशु पूतः
कल्पाननेकान् दिवि मोदते च ॥

अनेकलोकान्[1] समहस्तपादान्
भुक्त्वा परार्द्धद्वयमङ्गनाभिः ।
सहैव विष्णोः परमं पदं यत्
प्राप्नोति तद्यागरतेन भूयः[2] ॥

बह्वृचगृह्यपरिशिष्टे[3]

अथाऽतो वारुणविधिं वापीयज्ञं व्याख्यास्यामः । पुण्ये तिथिकरणे शुभे नक्षत्रे प्राचीं दिशमास्थाय प्राक्प्रवणे उदक्प्रवणे वा उदकसमीपेऽग्निमुपसमाधाय वारुणं चरुं श्रपयित्वा, आज्यभागान्तं कृत्वा, चतस्र आज्याहुतीर्जुहुयात् "समुद्रज्येष्ठा" इति प्रत्यृचम् । ततो हविषाऽष्टाहुतीर्जुहुयात् "तत्त्वा यामि ब्रह्मणा वन्दमानः" इति

1 हेमा. p. 933, अनेन लोकांश्च समस्त

2 *Ibid*, तद्योगबलेन

3 हेमा. p. 936; उत्सर्गमयूख ( *ed.* Gujarathi Press) p. 3

पञ्च। "त्वन्नो अग्ने वरुणस्य विद्वानि"ति द्वे। "इमं मे वरुण श्रुधी"ति च स्विष्टकृतं नवमम्। नव वै प्राणाः प्राणा वै आपः तस्मादापो नवभिर्जुहोति। मार्जनान्ते धेनुमवतारयेत्। अवतीर्यमाणामनुमन्त्रयेत्।

'इदं सलिलं पवित्रं कुरुष्व
शुद्धाः पूता अमृतास्सन्तु नित्यम्।
भावयन्तो सर्वतीर्थाभिषिक्तं
लोकाल्लोकं तरते तीर्यते च' ॥

इत्यनेन पुच्छाग्रे यजमानः स्वयं लग्नः आचार्येणाऽन्वारब्ध उत्तीर्य "आपो अस्मान्मातरः शुन्धयन्त्वि"त्यनयाऽपराजितायां दिश्युत्थापयेत् "सूयवसा हि भगवती भवतीह भूया" इति। यदि सा हिङ्करोति "हिङ्कृण्वती वसुमती वसूनामि"ति जपेत्। तां सचेलकण्ठां काञ्चनशृङ्गीं ताम्रपृष्ठीं वृषप्रजां रौप्यखुरां कांस्योपदोहां विप्राय सामगाय दद्यात् इतरां वा। शक्त्या दक्षिणा आचार्याय देया। तत उत्सर्गं कुर्यात्। "देवपितृमनुष्याः प्रीयन्ता"मिति उत्सृजेत् इत्याह शौनकः। यजमानो ब्राह्मणान् भोजयित्वा स्वस्त्ययनं वाचयेत्।

इति कूपवापीतडागविधिः ॥

## अथ द्वारीबन्धः

**देवीपुराणे**[1]

**ब्रह्मोवाच**

देव्यः शस्ताः सुरश्रेष्ठ सर्वकामप्रसाधिकाः ।
तासां समुपभोगार्थं जलपात्राणि कारयेत् ॥
द्वारीबन्धादिकाः शक्र [2]कूपशाख्यन्तकाः शुभाः ।
ततः[3] खातं तडागं तु विपाली [4]विश्वकी मता ॥
शोभाढ्या दीर्घिका प्रोक्ता चतुरस्रा तु वापिका ।
कूपाः पादविहीनाश्च सपादास्तोरणान्विताः ॥
संक्रमा बन्धवरणा सरन्ती मातृका मता[5] ।
गिरेरन्तर्गता द्वारी सस्फोटं ह्रकं तथा ॥
चक्रमर्दः सचलको ह्यर्गला चेति चाऽन्तिमा ।
वज्रनागमधोगामी न सिध्यन्ति कदाचन ॥
हेलात्मा च तथा चक्रं सुखसाध्या प्रकीर्तिता ।
उत्तमाधममध्याश्च स्वल्पपद्धा सुखग्रहा ॥
दैर्घ्योच्चबन्धगाथा तु साऽधमा परिकीर्त्तिता ।
शतसाहस्रपर्यन्ता द्विदण्डाष्टद्विदण्डिका ॥

1 हेमा. pp 919–924 ff

2 हेमा. p. 919, पुष्करिण्यन्तकाः

3 *Ibid*, तलखातं

4 *Ibid*, पौष्टिकी

5 *Ibid*, शक्र साबन्धकरणा झिरन्ती झिण्टिका मता

द्वारी श्रेष्ठाऽधमा तात बहुबन्धा च या भवेत् ।
सिकतापङ्कसच्छिद्रां सप्रजां परिवर्जयेत् ॥
शुभाहे दीर्घविस्तारं मित्वा बन्धं समाचरेत् ।
त्रिपञ्चाष्टकपर्यन्तः श्रेष्ठो बन्धः प्रकीर्तितः ॥
शतद्वयं शुभा पाली कराणां सप्तधाऽधमा ।
विस्तारः कथितः शास्त्रे पालीबन्धस्य पण्डितैः ॥
प्राकारकूटनलिकापुटकापृष्ठसञ्चयम् ।
पृष्ठमग्रे[1] भवेद्बन्धमर्द्धचन्द्रं सकम्बलम् ॥
भ्रूजिह्वा ललने शक्रमास्थानं तोयसङ्गमम्[2] ।
पाषाणघटितं बद्धमघटं बिल्वकाष्ठजम् ॥
शिलास्तम्भनिबद्धन्तु पृथुविस्तीर्णसञ्चितम् ।
वज्रसन्धानसंयोगं समं वा दान्तकं परम् ॥
यथाकालसहं विद्वान् कुक्षिघातं तु कारयेत् ।
न मध्यहृदये खातं कम्बले वाऽपि दापयेत् ॥
महादोषकरं तत्तु द्वारीकर्तुर्भयप्रदम् ।
प्रयत्नः कुट्टने कार्यो मृत्तिकाकूर्चनादिके ॥
नलिकासु[3] प्रदातव्यं लोहं मुसलघट्टितम् ।
समाप्तिपर्ययं यावत् उपलान् खातयेन्नृप ॥
अन्यथा न भवेद्गाढा[4] स्रावदोषकरी भवेत् ।
पालीं तस्माद्दृढां कुर्यादग्रपृष्ठां न घट्टिताम् ॥

1 हेमा. p. 920, पृष्ठमार्गे
2 *Ibid*, भूमेर्क्ष चलने शक्र तत्स्थानं तोयसंयमम्
3 A. S. B., नालिकेरादिदातव्या
4 I. O., प्रौढा

कूर्मवृषभमत्स्यादिहेमं चाऽऽदौ विनिक्षिपेत् ।
प्रारम्भेऽस्या महापूजा सेनकादिषु[1] कारयेत् ॥
वारुणं नागदेवं तु योगमन्त्रजपं सदा ।
आनिष्पत्ति तु कर्तव्यं अन्यथा भयदं भवेत् ॥
कर्तू राष्ट्रे[2] जले शक्र द्वारी च न दृढा भवेत् ।
दृढार्थं[3] प्रतिरूपाणि तदा लिङ्गं विनायकम् ॥
शक्तिपूर्वाणि कुर्वीत महालक्ष्मीर्यथा पुरे ।
शुभदा भवने लोके [4]नत्वा तोयं शिवं तथा ॥
आरामं तोरणं वापी कूपं वा समहोरगम् ।
द्वारिबन्धेषु कर्तव्यमुत्सर्गे गोप्रदानिकम् ॥
गोसहस्रं शुभं देयं महीं हेम च दक्षिणाम् ।
श्येनकं नागयज्ञं च द्वारीबन्धे सदा शुभम् ॥
चतुस्तोरणसंयुक्तं पताकादिविभूषितम् ।
उत्सर्गं विहितं द्वार्यामन्यथा शतशोकदम्[5] ॥
शकटेन बलिर्देयः [6]पशुघातपुरस्सरम् ।
स्फुरन्तं नागहृदयं मन्त्रं तत्र प्रयोजयेत् ॥
सम्पूर्णं जायते सर्वं न्यूनाधिककृतं च यत् ।

1 I. O., सेनकादिषु ; हेमा. p. 921 has श्येनकादिषु;

2 हेमा. p. 921, जने for जले

3 हेमा. p. 921, दृष्टार्थं for दृढार्थं

4 हेमा. p. 921, तदा तोयं; I. O., नत्वा तोयं Udaipur Ms. has नन्दातोयं

5 हेमा. p. 921, न शुभोदकम्

6 हेमा. p. 921, पशुपात

फलं च हयमेधस्य यत्कृतस्य भवेदिह ॥
समग्रं [1]तद्भवेत्तस्य द्वारीबन्धे कृते सति ।
इह कीर्तिः शुभं सर्वं विशत्रुश्च भवेन्नृप ॥
द्वारीबन्धेन कर्तारो नन्दन्ति प्रजया सह ।
तडागं नलकोपेतं परीवाहसमन्वितम् ॥
देवतारामसंयुक्तं सर्वकामप्रदायकम् ।
द्वारीबन्धे तु विस्तीर्णे [2]परीवाहास्तथा शुभाः ॥
अन्यथा न भवेच्छक्र दृढत्वं पालिबन्धने ।
मध्ये पाल्यास्सुविन्यासं जलमार्गं जलावहम् ॥
शैलं पक्वेष्टकं वाऽपि कार्यं क्रीडाय भूभृताम् ।
शालीक्षुरोपणे कुर्यान्नलकं शोभनं तथा ॥
सोपानपालिका कार्या विस्तीर्णा स्नानभोजने ।
शोभाधिक्येन संयुक्ता ऊर्द्ध्वं कार्या यथाविधि ॥
बन्धपृष्ठे दृढो बन्धः कार्यः कालसहस्तथा ।
एवं पुण्यमवाप्नोति स्थैर्ये कालवशात्कृते ॥
वाजिमेधः क्रतुर्यद्वत्सोऽपि पुण्यप्रदो भवेत् ।
द्वारीबन्धस्तथा तात पुण्यदो जायते नृणाम् ॥
पुण्यात्संसिध्यते तत्र नन्दादीनां निवेशनात् ।
जयन्त्यादितडागानि अष्टौ पापहराणि च ॥
तेषु द्वारी भवेच्छ्रेष्ठा देवारामसमन्विता ।
कूपवापीजलोपेता पुत्रायुःकीर्त्तिदा सदा ॥

1 हेमा. p. 921, लभते

2 *Ibid*, परिदाहरशुभस्सदा

सा परिग्रहसंस्थानं भूपतेर्नामकल्पिता ।
पुरपत्तनदेवानां सिद्ध्यर्थं जायते शुभा ॥
सरित् सिद्धालयैः शैलैर्या नक्रान्ता[1] वसुन्धरा ।
सौभाग्यं द्वारिबन्धस्य जलवेष्टाष्टकम्बला ॥
पितृदेवमनुष्याणां तज्जलं त्वभिनन्दितम् ।
पावनं जायते शक्र अन्यथा निष्फलं भवेत् ॥
अनुत्सृष्टं तु द्वारीषु[2] अपेयं सलिलं भवेत् ।
तस्माच्चोत्सर्गितं पेयं वर्षासूत्सर्जनं शुभम् ॥
तडागाश्चोत्तरे[3] संस्था ऐशान्यां पूर्वगाऽपि वा ।
दक्षिणे चैव लिङ्गं तु शिवा स्याच्छुभदा सदा ॥
पश्चिमे शुभगा नाम वायव्योत्तरतस्तथा ।
न कुर्युर्याम्ये नैर्ऋत्यामाग्नेय्यां च शुभार्थिना ॥
प्रदक्षिणेन पूर्वस्यां रोपितव्यं सदा शुभम् ।
अन्यथा कलहोद्वेगं मृत्युं वा लभते कृती ॥
तस्माद्राज्यायुःशुभदं पुत्रसन्ततिवर्द्धनम् ।
पश्चिमोत्तरपूर्वेण आरामं जायते कृतम् ॥
द्वारीबन्धं शिवोपेतं शक्तिभिर्नायकैर्युतम् ।
तदा कूपजलारामभूषितं सर्वकामदम् ॥
एवंविधं पुरोपेतं [4]ब्रह्मकुड्यमथाऽन्वितम् ।

1 हेमा. p. 922, विष्णुक्रान्ता

2 हेमा. p. 922, अनुत्सर्गितद्वारीषु

3 हेमा. p. 922, तत्पूर्वाचोत्तरे

4 हेमा. p. 923, ब्रह्मसूर्यान्तकान्वितम्; I. O., ब्रह्मकुड्यमथाऽन्वितम्; Udaipur Ms., ब्रह्मपुर्यमथाऽन्वितम्

कुर्याद्यः सुरशार्दूल स लभेदीप्सितं फलम् ॥
इह कीर्तिं शुभान् पुत्रान् परत्र परमां गतिम् ।
द्वारीबन्धात्फलं ब्रह्मन् हयमेधफलं[1] लभेत् ॥
समस्तपातकोच्छित्तिः कृते भवति देववत् ।
तस्मान्नृपेण कर्तव्यं विधिना द्वारिगं जलम् ॥
समस्तशास्त्रदृष्टेन[2] कर्मणा सफलं भवेत् ।
श्येनकादेस्तथा पूजा नागाङ्कहृदयं जपेत् ॥
द्वारीबन्धस्य सिद्ध्यर्थमन्यथा न भवेत् कृतम् ।
यतः पुण्यैस्तु संसिध्येत् द्वारीबन्धः सुरोत्तम ॥
अतः पुण्यविधिः कार्यो जपहोमव्रतादिकः ।
दशौरगौकसं कार्यं शिवस्यादेशतः शुभम् ॥
नागानां द्वारिसिद्ध्यर्थं नन्दाकूपं कृतं भवेत् ।
महापुण्या[3] भवेद्द्वारी किन्तु सन्देहसाधना ॥
कृता विशीर्यते कालात्तस्मात्कार्या सदा दृढा ।
द्वेषं पश्चिमयाम्यस्थं तत्कर्तुर्मृत्युदं भवेत् ॥
जयं पश्चिमपूर्वेण रतिपुत्रधनप्रदम् ।
याम्यसौम्यगतं दण्डं पत्नीधनविनाशनम् ॥
यक्षं वारुणगं भद्रराज्यायुः[4] पुत्रदं बलम्[5] ।
पूर्वोत्तरगतं देयं सुखदं धनदं मतम् ॥

1 हेमा. p. 923, हयमेधसमं भवेत्
2 *Ibid*, समन्त्रं शास्त्रदृष्टेन
3 हेमा. p. 923, तर्हि अपुण्या भवेद्द्वारी
4 *Ibid*, शय्यायुः
5 हेमा. p. 923, मतं for बलं

पश्चिमे सङ्गतं नन्दं नन्दनं कोशवर्द्धनम्[1] ।
जलवायुगतं हैमं हेमदं च भवेद्धनम् ॥
रक्षोवायुगतं काकानुच्चाटं कुरुते धनम् ।
अग्निवायुगतं[2] दाहं दहनं कीर्तिवर्द्धनम् ॥
ईशदाहगतं[3] पापं धनतापकरं तथा ।
वायुदाहगतं तेजो रत्नहेमगजापहम् ॥
एवं लक्षणमाश्रित्य कर्तव्याऽऽरामवाटिका ।
शुभावहा सदा कर्तू राज्यायुःसुखकीर्तिदा[4] ॥
वैपरीत्ये सदा लोकेऽधनं कर्तुर्भयावहम्[5] ।
नृप राष्ट्रे जले दोषान्न हन्याद्विधिना शुभम् ॥
सरुद्रां कारयेद्वारीं गणनाथसमन्विताम् ।
जयं च विजयं कार्यं सुष्ठु कुर्यात् [6]कुलाष्टकम् ॥
नागाख्यं हृदयं जप्त्वा प्रस्फुरत्स्थापने शुभम् ।
श्येनाः शिवादिदेव्यश्च[7] तर्पितव्या जलस्रजैः ॥
वस्त्रैर्नानाविधैर्गन्धैः फलधूपगणादिभिः ।
कार्यो महोत्सवो द्वार्यां पालीबन्धदृढार्थिभिः ॥

1 *Ibid*. p. 924 पश्चिमे संगतं मन्दं धनकोशविवर्धनम् : a variant नन्दनं कोशवर्द्धनं is also noted.

2 हेमा. p. 924, वारुणिकं

3 *Ibid*, देशदाहगतं

4 *Ibid*, सुतवित्तदा

5 *Ibid*, मदावहम्

6 हेमा. p. 924, सराष्ट्रकम्

7 *Ibid*, सेनाविवाहदेव्यश्च तर्पितव्याः पयोव्रतैः

दानं देयं सदा शक्र नृपराष्ट्रसुखावहम् ।
गोदानं भूमिदानं च कन्यादानं सुरोत्तम ॥
द्वारीबन्धे प्रदातव्यं एकं कोटिगुणं भवेत्[1] ।
गोमेधे नरमेधे च हयमेधे तथा मखे ॥
पुण्यं यज्जायते शक्र द्वारीबन्धे ततोऽधिकम् ।
वापीकूपतडागानि देवतायतनानि च ॥
एतानि पूर्तधर्मेषु शुभानि फलदानि च ।
दीनान्धमूकभीरूणां दानं देयं यथाविधि ॥
एकं कोटिगुणं पुण्यं जायते नाऽत्र संशयः ।
एतत्ते कथितं शक्र द्वारीबन्धस्य यत्फलम् ॥
प्रादुर्भावं तु देवीनां क्षेपान्माहात्म्यकीर्तितम् ।
शिवदूतास्तथा सम्यक् प्रादुर्भावं च लक्षणम्[2] ॥
यः शृणोति नरः सम्यक् सर्वपुण्यफलं लभेत् ।
कूपारामतडागादि प्रपाद्यग्निप्रतिश्रयम् ॥
सर्वेशाधिष्ठितं वत्स अनन्तफलदायकम् ।
यः कुर्याद्वारिबन्धानां तडागानां शतं तथा ॥
सर्वेश्वरजलं कृत्वा लभेत् पुण्यं ततोऽधिकम् ।
शिवसूर्यहरिब्रह्मसंयुक्तं सर्वकामदम् ॥
आद्या मूर्तिः परा ध्येया व्यापिनी मन्त्रतन्त्रगा ।

1 हेमा. p. 924 has two lines, which are missed by the text :

गजाश्वरत्नदानं च अन्नदानं प्रयत्नतः ।
द्वारीबन्धेषु दातव्यं सर्वं कोटिगुणं भवेत् ॥

2 I. O., and हेमा. p. 925 have समंगलम् for च लक्षणम्

सर्वेशं सर्वदैवत्यं ब्रह्माद्यैः परिवारितम् ॥
स्थापितं जायते शक्र सर्वाघभयनाशनम् ।

तथा

विजनं नैव कर्तव्यं मठाराममविवर्जितम् ।
सर्वेशं विघ्नदं कर्त्तुं नृपलोकभयापदम् ॥
तस्माच्चाऽऽदौ जलं कार्यमारामं वाटिका तथा ।
मठं देवालयं पश्चाद्याम्यरक्षोगतं शुभम् ॥
कूपारामं यथाशस्तं कर्तुर्लोके प्रजायते[1] ।
तथा कुर्यात् सुरश्रेष्ठ यथा शोभा दृढा भवेत् ॥
पूर्वामाश्रित्य कर्तव्यं तस्योत्तरपदेऽपि[2] वा ।
न पूर्वात् व्यत्ययं[3] कुर्यान्मठं देवालयं गृहात् ॥
कृतं भयप्रदं लोके यथा रक्षोग्निगं[4] जलम् ।
वायव्यं चाऽपि देवस्य भयदं भवने कृतम् ॥
कूपं पञ्चकरादूर्ध्वं यावद्वंशं[5] तदुद्भवम् ।
वापी [6]दण्डद्वयादूर्ध्वं दशवंशा नृपोत्तमैः ॥
कर्तव्या सर्वथोत्तारा द्वित्रिश्चैकपथाऽथवा ।

1 हेमा. p. 915
2 हेमा. p. 916, उत्तरपथेऽपि
3 *Ibid*, पूर्वव्यत्ययं
4 *Ibid*, चाऽग्निभयं
5 I. O., यावदुग्रं
6 हेमा. p. 916, दण्डमयात् ; and दशवर्गात् for दशवंशाः

विन्यासं भद्रकं [1]चाऽन्यैर्वृत्ता वाचयता तथा ॥
त्र्यस्त्रा वा चाऽर्द्धचन्द्रा वा धनुषा च शिवाकृती[2] ।
कर्त्तव्या [3]द्रव्यकारा तु गोपथा सर्वकामदा ॥
वेदाष्टमध्यगोत्सारा करसार्द्धा यथा भवेत् ।
कूपो वा शैलयष्टी वा देया नेमी तथा दृढा ॥
भवने काष्ठपाषाणमृद्धपीठसमुच्छ्रया ।
सुबद्धतोरणोपेता गणनाथगृहान्विता ॥
याऽधो क्षीणा भवेद्वापी नृपादीनां शुभावहा ।
नागयक्षगृहैर्देव्या भूषिता क्रीडनाकुला ॥
वापी भद्रा सुरश्रेष्ठ सर्वकामप्रदा नृणाम् ।
पक्षाश्रिता[4] यथाकान्ता विजया मङ्गला तथा ॥
प्रपायोक्त्री भवेद्वापी नृपादीनां शुभावहा ।
वृत्तायताश्चतुस्त्रावा वाप्यः साधारणा मताः ॥
शेषाः काम्याधिकारेण कूपो वृत्तः सुखावहः ।
प्रतिपादकरैर्देया उत्साराश्चाऽङ्गुलैः शुभाः ॥
न देवादधिकं कूपं कुर्याच्छक्र कदाचन ।

तथा

सप्त गङ्गा हि वरदा शूलोद्यतकरं परम् ।
याम्ये कल्पतरुर्ब्रह्मा वामतस्तु जनार्दनः ॥

1 हेमा. p. 916, राज्ञो वृत्ता वा चायता

2 I. O., धुराकृती

3 हेमा. p. 916, द्रव्यसारेण

4 I. O., भद्रा पद्माश्रिता

सूर्यश्चाऽभ्रस्फुरत्तेजाः पादान्तस्थित ऊर्द्धगः ।
सुरूपाकृतिभागस्थं कृत्वा जलपतिं हरिम् ॥
तदा पापेन सन्त्यक्तो दिवं भोक्ष्यति चाऽमृतम् ।
तच्च रूपं सुरेन्द्राद्या नागा यक्षा ग्रहोरगाः ॥
पूजयन्तो भविष्यन्ति विगतश्च(?)गदा नराः ।
प्रासादमण्डपगृहे मठे चित्रशिलातले ॥
मण्डपे पट्टशालायां सर्वेशं पूजयन्ति ये ।
सारामं तु जलोपेतं मठं [1]भूमिद्वयोच्छ्रितम् ॥
शान्तिधामाग्निव्याख्यानविद्याकोशजपादिभिः ।
युक्तं देवाय दातव्यं सर्वकामप्रदायकम् ॥
महापापवियोगादि शमनं[2] भूमलापहम् ।
राज्यायुःशुभसौभाग्यवर्द्धनं कीर्तिवर्द्धनम् ॥

तथा

विजलं नैव कुर्वीत मठाराममविवर्जितम् ।
सर्वेशं विघ्नदं कर्त्तुर्नृपलोकभयप्रदम् ॥

तथा

देवायतनकोटिं यः कुर्याद्धेमाण्डभूषणम् ।
एकं सर्वेश्वरं राम कृतं तस्याऽधिकं फलम् ॥
गङ्गोदकेन यत् पुण्यं स्नापनात् परिकीर्त्तितम् ।
तत्पुण्यं तैर्जलैः स्नाप्य तदैशानगतैर्लभेत् ॥

इति द्वारीबन्धः ॥

1 I. O., भूमित्रयोच्छ्रितम्
2 I. O., महापापादिरोगादि

## २१

# अथ वृक्षप्रतिष्ठा

तत्र देवीपुराणे[1]

ब्रह्मोवाच

अनूपे सजले स्थाने पुमान् दैवेऽथ वा जले ।
आरामं रोपयेत् प्राज्ञो विधिदृष्टेन कर्मणा ॥

'अनूपे' अतिस्निग्धे । 'सजले' जलाशयसहिते[2] ।

कालं देशं तथा पात्रं बीजं बीजक्रियाविधिः ।
तथा फलमसंसृष्टमेवमारोपितं भवेत् ॥
फलपुष्पविशुद्धस्य विशुद्धं सर्वसंस्कृतम् ।
धर्मकामार्थमोक्षादिसाधने हन्यतेऽन्यथा ॥
विधिव्यत्ययबीजादिभूषिते भूपरिग्रहे ।
कूलादिभिः सुरश्रेष्ठ यजमानो विनश्यति ॥

'पात्रं' बीजवापे य आचार्यः। 'बीजक्रियाविधिः' अङ्कुरजननसमर्थबीजकरणप्रकारः । 'विधिव्यत्ययः' विधेरन्यथाकरणम् । 'कूलादिभिः' नदीकूलादिभिः[3] ।

1 हेमा. p. 950

2 *Ibid,* explanation reproduced.

3 Reproduced by हेमा. p. 950, with the exception of the last clause.

आरामं सहकाराद्यैर्न शुद्धं कारयेत् क्वचित् ।
चिताज्वलनसंलग्ने चितिवल्मीकदूषिते ॥
सहकारवनं कृत्वा याति कर्ता यमालयम् ।
गृहात् पुरोऽथवा तात स्थिते संरोपिते तथा ॥
प्रतिपाद्यं[1] भवेत्तत्र छिन्ध्याद्वा हितमिच्छता ।
अश्वत्थवटप्लक्षादि औदुम्बर्यो विदिक्स्थताः ॥
जगतो भयदा यस्मात्तस्मात्तांश्छेदयेत्पुरे[2] ।
रोपयेद्बिल्ववीराम्रकपित्थकपिलार्जुनान् ॥
दाडिमीं बीजपूरं च उदगाद्या द्रुमाः पुरे[3] ।
प्लक्षाः प्राच्यां सदा रोप्याः [4]शाकासनसधन्वनाः ॥
कदम्बो वायवे तालो बिल्वाशोकौ तु सर्वगौ ।
मयन्दीं माधवीं रम्भाः क्रीडास्थाने निवेशयेत् ॥

'वीरो' भल्लातकवृक्षः । 'कपिला' शिंशपा । 'कपित्थः' प्रसिद्धः दाडिमी च । 'असनो' बीजकः । 'वायव्ये' वायुदिग्भागे[5] ।

जातीनेपालिकाकुन्दतगरागन्धमल्लिकाः ।
शुभाय कथितास्तात व्यत्ययाद्भयदा यतः ॥
पूर्वेण सुसमारामं प्रोक्तं चोत्तरतोऽथवा ।

1 I. O., and हेमा. p. 951, प्रतिपक्षम्

2 हेमा. p. 915, मुने for पुरे

3 *Ibid*, परे

4 A. S. B., शाकटाध्वनधन्वनाः; हेमा. p. 915, सकासनसधन्वताः

5 Reproduced by हेमा. p. 951

पश्चिमे धनदं प्रोक्तं वायव्यां कीर्तिवर्द्धनम् ॥
न कुर्युर्याम्यनैर्ऋत्ये आग्नेये च शुभार्थिनः ।
अन्यथा कलहोद्वेगं मृत्युं वा लभते कृती ॥
तस्माद्राज्यायुःशुभदं पुत्रसन्ततिवर्द्धनम् ।
पश्चिमोत्तरपूर्वेण आरामं जायते शुभम्[1] ॥
अथवाऽऽरामजान् दोषान् [2]चामुण्डी शमयेत् कृतान् ।
महाभयं महालक्ष्मीर्ग्रहकृत्यां तथोत्थिताम् ॥

'ग्रहकृत्यां' ग्रहपीडाम् ।

पुष्पपत्रफलानां च रजोवेणुसमाः समाः ।
कर्त्ता देवसभावासं विधौ यात्यविधावधः ॥

इत्यारामप्रतिष्ठा ॥

## अथ वृक्षरोपणविधिः

तथा[3]

एवं यथोदितां भूमिं शुद्धां प्लवसमाहिताम् ।
परिगृह्य यजेद्देवं[4] धनपालं शिखिध्वजम् ॥
सोमं च नागराजं च ततः कुर्यात्परिग्रहम् ।

1 I. O., and हेमा. p. 951, कृतम्
2 A. S. B., चामुण्डा शमयेत्तदा
3 हेमा. p. 952 ( from देवीपुराण )
4 *Ibid*, यथा देव वनमाले

यद्बीजं मन्त्ररहितं गर्भाधानादिवर्जितम् ॥
वापितं सहकारादि यद्बीजं मन्त्रवर्जितम् ।
तज्जातं वाऽपकाराय तथा जायेत वैकृतम् ॥
'शङ्कराये'ति मन्त्रेण 'इन्द्र एही'ति मन्त्रितम्' ।
त्र्यम्बकेन तु राजेन्द्र बीजं भवति शोभनम् ॥
अविधौ कूपवाप्यादिखननोत्सरणं च यत् ।
कुर्वन्ति सहकारादिरोपणं च नराधमाः ॥
फलं तेषां लभन्ते न इह चाऽन्ते ह्यधोगतिः ।
ये शूद्राः[2] शूद्रविधिना कुर्वन्ति च न रोपणम् ॥
ते आत्मनृपलोकानां महासंशयकारकाः ।
कूपारामतडागादि प्रपावापीप्रतिश्रयम् ॥
सर्वेशाधिष्ठितं वत्स ह्यनन्तफलदायकम् ।
वृक्षान् पञ्च समारोप्य शिवधाम प्रपद्यते ॥
ये च पापा दुराचाराः श्रीतरुच्छेदकारिणः ।
तेऽप्यवीच्यादिनरके पच्यन्ते ब्रह्मणो दिनम् ॥
मृतास्ते जीवमानास्तु ब्रह्मघ्नाः कीर्तिता भुवि ।
तस्मिन् देशे भयं नित्यं राजानो न चिरायुषः ॥
न च नन्दत्ययं लोको यत्र श्रीवृक्षच्छेदनम् ॥

नन्दिपुराणे[3]

क्रीडारामं तु यः कुर्यादुद्यानं पुष्पसङ्कुलम् ।

1 हेमा. p. 952, इत्थं नु पञ्चमन्त्रवित्

2 हेमा. p. 952, येऽशुद्धाः शुद्धविधिना

3 हेमा. p. 947

तोयाश्रयसमायुक्तं गुप्तं फलसमृद्धिमत् ॥
स गच्छेच्छङ्करपुरं वसेत्तत्र युगत्रयम् ।
मार्गे वृक्षन्तु यो दद्यात्छायाविटपसङ्कुलम्[1] ॥
स कल्पतरुखण्डेषु[2] महेन्द्रोद्यानवेश्मसु ।
विनोद्यन्तेऽप्सरोवृन्दैर्देववच्च युगायुगम्[3] ॥
फलवृक्षं तु यो दद्याद्धर्ममुद्दिश्य मानवः ।
स सर्वकामतृप्तात्मा गच्छेत्त्वरुणमन्दिरम् ॥

स्कन्दपुराणे[4]

यस्तु वृक्षं प्रकुरुते छायापुष्पफलोपगम् ।
पथि [5]दद्यान्नरः सोऽपि सन्तारयति वै पितॄन् ॥
तथैव दद्याद्विप्रेभ्यो निष्क्रीणाति च तत्पुनः ।
यावत्पुष्पाणि च फलान्युपभुञ्जन्ति देहिनः ॥
तावद्युगसहस्राणि सन्तारयति वै पितॄन् ॥

महाभारते[6]

स्थावराणां च भूतानां जातयः[7] षट् प्रकीर्तिताः ।
वृक्षगुल्मलतावल्यस्त्वक्सारास्तृणजातयः ॥

1 हेमा. p. 940

2 *Ibid*, p. 941, सकुल्यास्तरुखण्डेषु

3 *Ibid*, युगार्बुदम्

4 हेमा. p. 940

5 हेमा. p. 940, दिव्ये नरः पापात्

6 हेमा. p. 937

7 हेमाद्रि has जातयः; Udaipur Ms. reads जायते

एतास्तु जात्या वृक्षाणां तथाऽऽरोपे गुणास्त्विमे ।
कीर्तिश्च मानुषे लोके प्रेत्य चैव शुभं फलम् ॥
अतीतानागतौ चोभौ पितृवंशौ च भावयेत् ।
तारयेद्वृक्षरोपी च तस्माद् वृक्षान् प्ररोपयेत्[1] ॥

मत्स्यपुराणे[2]

सूत उवाच

पादपानां विधिं वक्ष्ये तथैवोद्यानभूमिषु ।
तडागविधिवत् सर्वमासाद्य जगतीश्वरः ॥
ऋत्विङ्मण्डपसम्भारमाचार्यश्चाऽपि तादृशः ।
पूजयेद्ब्राह्मणांस्तद्वत् हेमवस्त्रानुलेपनैः[3] ॥
सर्वौषध्युदकैः सिक्तान् पिष्टालक्तविभूषितान् ।
वृक्षान् माल्यैरलङ्कृत्य वासोभिरभिवेष्टयेत् ॥
सूच्या सौवर्णया कार्यं सर्वेषां कर्णवेधनम् ।
अञ्जनं चाऽपि दातव्यं तद्वद्धेमशलाकया ॥
फलानि सप्त चाऽष्टौ वा कालधौतानि कारयेत् ।
प्रत्येकं सर्ववृक्षाणां वेद्यां तान् न्यवेशयेत् ॥
धूपोऽत्र गुग्गुलुः श्रेष्ठः ताम्रापात्रैरलङ्कृतान् ।
सप्त धान्यान् तिलान् कृत्वा वस्त्रगन्धानुलेपनैः ॥

1 हेमा. p. 937 has four further ślokas from महाभारत, here.

2 हेमा. p. 953

3 Udaipur Ms. has a big gap here, which is filled by I. O., A. S. B. and Hemādri.

कुम्भान् सर्वेषु वृक्षेषु स्थापयित्वा नरेश्वरः ।
सहिरण्यांस्त्वशेषांस्तान् कृत्वा बलिनिवेदनम् ॥
स यावल्लोकपालानां[1] इन्द्रादीनां विधानतः ।
वनस्पतेश्च विद्वद्भिर्होमः कार्यो द्विजातिभिः ॥
ततः शुक्लाम्बरधरः सौवर्णकृतभूषणः ।
सकांस्यदोहां सौवर्णशृङ्गाभ्यामतिशालिनीम् ॥
पयस्विनीं वृक्षमध्यात् उत्सृजेत्तामुदङ्मुखीम् ।
ततोऽभिषेकमन्त्रेण वाद्यमङ्गलगीतकैः ॥
ऋग्यजुःसाममन्त्रैश्च वारुणैरभितस्तथा ।
तैरेव कुम्भैः स्नपनं कुर्युर्ब्राह्मणपुङ्गवाः ॥
स्नातः शुक्लाम्बरधरो यजमानोऽपि पूजयेत् ।
गोभिर्विभवतः सर्वान् ऋत्विजस्तान् समाहितः ॥
हेमसूत्रैः सकटकैरङ्गुलीयैः पवित्रकैः ।
वासोभिः शयनीयैश्च तथा प्रस्तरपादुकैः ॥
क्षीराभिषेचनं दद्युर्यावद्दिनचतुष्टयम् ।
होमश्च सर्पिषा कार्यो यवैः कृष्णतिलैस्तथा ॥
पलाशसमिधश्शस्ताः चतुर्थेऽह्नि तथोत्सवः ।
दक्षिणा च पुनस्तद्वत् देया तत्राऽपि शक्तितः ॥
यद्यदिष्टतमं किञ्चित् तत्तत् कुर्यादमत्सरः ।
आचार्यं द्विगुणं दत्वा प्रणिपत्य विवर्जयेत् ॥
अनेन विधिना यस्तु कुर्यात् ब्रह्मोत्सवं बुधः ।
सर्वान् कामानवाप्नोति पदं चाऽऽनन्त्यमश्नुते ॥

1 हेमा. p. 953, यथावल्लोकपालानां

यश्चैकमपि राजेन्द्र वृक्षं संस्थापयेन्नरः ।
सोऽपि स्वर्गे वसेद्राजन् यावदिन्द्रायुतत्रयम् ॥
भूतांश्च भव्यान् मनुजान् तारयेद्रोमसम्मितान् ।
परमां सिद्धिमाप्नोति पुनरावृत्तिदुर्लभाम् ॥

पद्मपुराणे[1]

अपुत्रस्य च पुत्रत्वं पादपा इह कुर्वते ।
यच्छन्ति रोपकेभ्यस्ते सत्तीर्थे[2] तर्पणादिकम् ॥
यत्नेनाऽपि च राजेन्द्र पिप्पलारोपणं कुरु ।
स तु पुत्रसहस्राणां एक एव करिष्यति ॥

'पुत्रसहस्राणां' कर्त्तव्यमिति शेषः[3] ।

धनी चाऽश्वत्थवृक्षेण ह्यशोकः शोकनाशकः ।
प्लक्षो यज्ञप्रदः प्रोक्तः चिञ्चा चाऽऽयुःप्रदा स्मृता ॥
जम्बुकी कन्यदा प्रोक्ता भार्यादा दाडिमी तथा ।
अरणू[4] रोगनाशाय पलाशो ब्रह्मदस्तथा ॥
प्रेतत्वं जायते पुंसो रोपयेद्यो विभीतकम् ।
अङ्कोले कुलवृद्धिः स्यात् खदिरे चाऽप्यरोगता ॥
निम्बप्ररोपको यस्तु तस्य तुष्टो दिवाकरः ।
श्रीवृक्षे शङ्करो देवः पाटलायां तु पार्वती ॥

1 हेमा. p. 938

2 हेमा. p. 938 explains : सत्तीर्थे पुत्रकृतं तर्पणादि तृप्त्यादिजन्यं फलं रोपकस्य प्रयच्छन्ति इत्यर्थः ।

3 Reproduced by हेमा. p. 938

4 हेमा. p. 938, अरलु

शिंशपायामप्सरसः कुन्दे गन्धर्वसत्तमाः ।
तिन्तिलीकं दासवर्गः वकुलो दस्युदः तथा ॥

'श्रीवृक्षो'बिल्वः । 'तिन्तिलकः' अम्लवृक्षः ।

पुण्यस्त्रीदायकश्चैव चन्दनः पनसस्तथा ।
सौभाग्यदः चम्पकश्च करीरः पारदारिकः ॥
अपत्यनाशदस्तालो नादेयः कुलवर्द्धनः ।
बहुभार्यो नारिकेली द्राक्षा सर्वाङ्गसुन्दरी ॥
रतिप्रदा तथा केली मोचकी शत्रुनाशिनी ॥

'मोचकी' शाल्मलिः ।

इत्यादयः तथाऽन्ये च ये नोक्तास्तेऽपि दायकाः ।
प्रतिष्ठान्ते गमिष्यन्ति ये नरा वृक्षदायकाः ॥

नन्दिपुराणे[1]

तरुपुत्रं तु यः कुर्याद्विधिवद्ब्रह्मसन्निधौ ।
स महापातकैर्मुक्तः समुद्धृत्य कुलत्रयम् ॥
नरकेभ्यो नरो याति प्रजापतिपुरं शुभम् ॥

स्कन्दपुराणे[2]

महादेवो महादेवीं इदं वचनमब्रवीत् ।
शृणुष्व येन विधिना गृह्यतेऽवनिजः सुतः ॥

'अवनिजो' वृक्षः ।

1 हेमा. p. 955

2 *Ibid* ; हेमा. supplies the first five lines of the passage

सुपुत्रार्थं भूमिरुहं ग्रहीष्यामीति पार्वति ।
सोपवासा भवेन्नारी शुचिवृत्ता शुचिव्रता ॥
ततश्चैव सहस्रांशावस्तशृङ्गगते रवौ ।
विप्रानामन्त्रयेद्रात्रौ पावनान् वेदवादिनः ॥
विप्रानामन्त्रयित्वा तु शुचिवस्त्रा शुचिव्रता ।
शयीत सनमस्कारा सदर्भा भूमिमाश्रिता ॥
गमयित्वा तथा रात्रिं सवितर्युदितेऽपि च ।
भक्ष्यभोज्यं समादाय व्रजेद्यत्र भवेत्तरुः ॥
ततस्तं स्नापयित्वा तु सातपत्रं सभूषणम् ।
तं तरुं तरुणीकृत्य ततश्छायानुगामिनम् ॥
यथोपपन्नमन्नाद्यं भोजयित्वा द्विजोत्तमान् ।
पुण्याहं कारयित्वा तु ऋत्विजाऽप्यथवाऽऽत्मना ॥
तृप्तानां ब्राह्मणानां वै [1]तद्वेलाकूतमात्मनः ।
निवेद्य कृतमुद्दिश्य सद्भावेन परेण हि ॥
अपुत्राऽहं हि भगवन् पुत्रप्रकृतकं[2] तरुम् ।
ग्रहीष्यामि ममाऽनुज्ञां कर्त्तुमर्हथ सत्तमाः ॥

'पुत्रप्रकृतकः' पुत्रसदृशः ।

ततस्तैरप्यनुज्ञातं तं तरुं तरुणायुषि ।
भूमिदेवसमक्षं वै गृह्णीयात्तनयं प्रियम् ॥

1 हेमा. p. 956, चैतत्ते कृत्यमात्मनः

2 *Ibid*, पुत्रप्रतिकृतिं

'तरुणायुषि' वर्तमानं इति शेषः। 'भूमिदेवसमक्षं' ब्राह्मणाग्रतः[1]।

गृहीतो विधिनाऽनेन शुभभूमिरुहात्मजः[2]।
शुभे सुखाय भवति विपरीतेन दुःखदः॥
न पुत्राणां शतं वाऽपि पीनश्रोणिपयोधरे।
एकोऽपि भूरुहः श्रेष्ठः पुत्रत्वे कल्पितः सुतः॥

मत्स्यपुराणे[3]

दशकूपसमा वापी दशवापीसमो ह्रदः।
दशह्रदसमः पुत्रो दशपुत्रसमो द्रुमः॥

इति वृक्षरोपणविधिः॥

1 Reproduced by हेमा. p. 956

2 In हेमा. p. 956 two lines are supplied :
अनेन विधिना यस्तु गृहीततरुपुत्रकम्।
पितॄणां निरयस्थानां मधुधारां स वर्षति॥

3 हेमा. p. 559

# २२

# अथाऽऽश्रयदानम्

तत्र कालिकापुराणे[1]

शङ्करात् परमं नाऽन्यदतस्तस्मै विकल्पयेत् ।
यतीनामाश्रयं[2] दद्यात् कृत्वा पक्केष्टकामयम् ॥

'विकल्पः' सङ्कल्पः[3] ।

सुशीलं चारुनिर्माणं परिवारसमन्वितम् ।
व्याख्यामण्डपसंयुक्तमासनैर्विविधैर्युतम् ॥
पुष्पोद्यानसमायुक्तं सोदकं शङ्करालये ।
ग्रामे दीपेन्धनाद्यर्थं प्रेष्याणां चैव वोत्तमे ॥
कौपीनोपानहाद्यर्थमाश्रयेऽपि नियोजयेत् ।
ततोऽभ्यर्च्य यतीन् भक्त्या भोजयित्वा विशेषतः ॥
वस्त्रैश्चैव प्रपूज्येशं शक्त्या तेभ्यो निवेदयेत् ।
अनेनाऽऽश्रयदानेन सर्वकामयुतो नरः[4] ॥

1 हेमा. p. 629

2 हेमा. and I. O., वाऽपि

3 Reproduced by हेमा. p. 629

4 Omission here : see हेमा. p. 629
प्रीयतां स महादेवः चन्द्रमौलिर्महेश्वरः ।
इत्युक्त्वा पुण्यदिवसे दत्वा चैवाऽत्र दक्षिणाम् ॥

भुक्त्वा चाऽमरलोकानां भोगान् गच्छेत्तदालयम् ॥

'तदालयं' शङ्करालयम् ।

इत्याश्रयदानम् ॥

## अथ प्रतिश्रयदानम्

तत्र देवीपुराणे[1]

शक्र उवाच

पुरस्य पश्चिमे भागे दक्षिणे चोत्तरेऽथवा ।
पूर्वे वा मध्यतो वाऽपि ये कुर्वन्ति प्रतिश्रयम् ॥
देवतास्तत्र कास्स्थाप्याः का न स्थाप्या द्विजोत्तम ।
दिवि भागगतां ब्रूहि स भवेद्येन शान्तिदः ॥

ब्रह्मोवाच

दक्षिणोत्तरपूर्वेण पश्चिमेन सुरेश्वर ।
अथ मध्यगतः शक्रः कार्योऽयं तत्प्रतिश्रयः ॥
यत्र श्रान्ताश्च[2] खिन्नाश्च विश्राम्यन्ति द्विजातयः ।
प्रतिश्रयस्य कर्त्तारः स्वर्गे तिष्ठन्ति ते चिरम् ॥
तस्मात्प्रतिश्रयः कार्यो दृष्टादृष्टफलार्थिभिः ।
देवताधिष्ठितः शक्रः सर्वसौख्यप्रदो भवेत् ॥

1 हेमा. p. 636

2 Udaipur Ms. reads शान्ताश्च

देवतानां त्रयं प्रोक्तं चतुर्थो नोपपद्यते ।
महिषघ्नीं तथा यक्षं नायकं तत्र कारयेत् ॥
महिषघ्नी भवेन्मध्ये ज्येष्ठस्थाने च नाऽन्यथा ।
वामतो नायकः कार्यो दक्षिणे यक्षराट् तथा ॥
अथवा दिग्गताः कार्यास्तत्राऽपि कथयामि ते ।
यद्द्वारं सम्मुखं तस्य देवीं तत्र प्रतिष्ठयेत् ॥
नक्षत्रनायकं कार्यं द्वाराभ्यां मध्यतः स्थिताः ।
एवं कृते फलं यत्तु वक्तुं तत् केन शक्यते ॥
केवलं फलमेतस्य सुखं राज्यं यशः श्रियः ॥

इति श्रीभट्टहृदयधरात्मजमहासान्धिविग्रहिकभट्ट-
श्रीलक्ष्मीधरविरचिते कृत्यकल्पतरौ
दानकाण्डं सम्पूर्णम् ॥

॥ श्रीरस्तु ॥

* I. O. has the following at the end :

सर्वेषां मौलिरत्नानां भट्टाचार्यमहात्मनाम् ।
एतद्विद्यानिवासानां दानकाण्डाख्यपुस्तकम् ॥
व्योमेन्दुशरशीतांशुमितशाकोर्जशेषतः ।
शूद्रेण कविचन्द्रेण विलिख्य परिहारितम् ॥

शकाब्दः [ 1510 ]

# APPENDIX A

Readings of the Panjab University Ms. ( No. 8162. )

P. 4, l. 1, begins fol. 2 ; l. 3, येन सत्वोपकाराय for यत्र स० ; l. 7, धर्नं उत्सृज्य for स्वधर्नं ; l. 10, यत्कृतार्थो for यः कृतार्थः ; l. 13, लुब्धानु for लुब्धा न ; l. 15, उक्त्वा चैव for दृष्ट्वा चैव.

P. 5, l. 4, प्रतिपादनम् for प्रतिपादितम् ; l. 5, वियते for वक्ष्यते ; l. 13, अनपेक्ष्य for अनवेक्ष्य ; l. 15, अपेक्ष्यैव for अवेक्ष्यैव ; l. 16, आहुरैहिकं फलहेतुकम् for इहैकफल-हेतुकम् ; l. 17, स्त्रीपानमृगयाक्षाणां for स्त्रीयानमृ-गयाक्षाणाम्.

P. 6, l. 1, यार्थिभ्यः प्रयाचितः for योषिद्भ्यो यत्प्रदीयते ; l. 2, प्रदीयते चेत्तद्दानं ; l. 6, दीयते अपकर्तृभ्यः.

P. 7, l. 8, पिशुनभ्रूणहन्तृभ्यां for पिशुनभ्रूणहन्तृभ्यः ; l. 11, यद्दत्तं for यद्दानं ; l. 12, तत्तु for तेन ; l. 16, वैदिको दानमाग्नेयं for वैदिको दानमार्गोऽयं ; l. 17, कूपारामतडा-गादि for प्रपारामतडागादि.

P. 8, l. 2, यदप्यते for यदिज्यते ; l. 3, काम्यमित्यभिधीयते for काममित्यभिधीयते ; l. 4, अर्थापेक्षमिति स्मृतम् for अन्वा-पेक्षमिति स्मृतौ ; l. 7, अधमानि तु for अधमनीति ; l. 7, मितुः for विदुः ; l. 8, हस्तिनः for दन्तिनः ; l. 14, बहुत्वादर्थजातीनां for बहुत्वादनुजातानां ; l. 16, अधीतं वा for अधीतं च.

P. 9, l. 4, मुक्तदोषाद्विवर्जितम् for मुक्तदोषैः क्विवर्जितम् ; after l. 4, adds कामधेनुवद्दानं फलति आत्मेप्सितं फलम् ; l. 8, विशिष्टो ह्यन्नदात्परः for विशिष्टो नाऽन्नदात्परः ; l. 9, पृथिवीमपि

for वसुधामपि ; l. 10, न काश्चिद्गतिमाप्नुयात् for न किश्चित् गतिमाप्नुयात् ; l. 11, शाकमुष्टिं वा श्रद्धाभक्तिसमुद्यता for श्रद्धाभक्तिसमन्वितम् ; l. 14, निमित्तत्वेन for तत्त्वेन ; l. 15, न्यायार्जितमित्यर्थः for न्यायार्जितमित्यन्यः ; l. 17, inserts 'परिभोगः' before परिभोगसाधनम्.

P. 10, l. 1, पुरातनमिति for धरातलमिति ; l. 2, adds हस्त्यश्वादि between उत्तममपि and जीर्णताम् ; l. 3, adds रक्षादिप्रयोजन between वृथारक्षा and व्यतिरेकेण ; l. 4, प्रसूयते अस्मिन्निति प्रसवः for प्रसूयते अनेन इति प्रसवः ; l. 10, याचिते नानुसूयया for याचते चाऽनुसूयया ; l. 13, adds तदैष्टिकम् after दक्षिणादि ; l. 13, omit च.

P. 11, l. 1, सुविशेषतः for सविशेषतः ; l. 2, श्रद्धापूतन्तु शक्तितः for श्रद्धापूतेन शक्तितः ; l. 3, adds मनुः before the line ; l. 8, स्मृतम् for विदुः ; l. 9, स्मृतम् for विदुः ; l. 10, असंस्कृतं for असत्कृतं ; l. 14, प्रतिश्रुत्य for प्रतिज्ञातं ; l. 16, वर्त्तमानांस्तु सप्ततम् for वर्त्तमानांश्च सप्त च ; l. 18, दत्तस्य हरणेन च for दत्तस्याऽऽच्छेदनेन च ; l. 19, तत्पुण्यं विप्रणश्यति for तत्सर्वं तस्य नश्यति.

P. 12, l. 1, adds तथा before आज्ञां कृत्वा ; l. 2, सन्तापको for सन्तप्यते ; l. 4, कृशवृत्तिनम् for कृशवृत्तिकम ; l. 10, उभावव्रतिकावेतौ for उभावव्रतिनावेतौ ; l. 17, योऽर्चितं for योऽर्चितः.

P 13, l. 12, प्रदीयते for प्रयच्छति.

P. 14, l. 4, प्रतिगृहीत for प्रतिगृह्णीयात् ; l. ·, देशतः वाराणस्यादौ for देशतः प्रयागादौ ; l. 10, तस्मादप्यद्भिः for तस्मादद्भिः.

P. 15, l 2, धर्मेषु for धर्मसु ; l. 9, वनौकसम् for वनौकसाम् ; l. 11, स एव परमो धर्मो योगिनामात्मदर्शनम् for यतीनां परमो धर्मो यद्योगेनाऽऽत्मदर्शनम् .

P. 16, l. 1, तत्र बृहस्पतिः for बृहस्पतिः ; l. 10, भरणाधिकम् for भरणादिकम् ; l. 11, अदेयं स्यादतोऽन्यथा for न देयं स्यात्ततोऽन्यथा ; l. 13, स्वकुटुम्बाविरोधेन for कुटुम्बस्याऽविरोधेन.

P. 17, l. 6, प्रायश्चित्तीयते नरः for प्रायश्चित्तीयते हि सः ; l. 8, ग्रहस्वामिनोऽदर्शयित्वा for ग्रहस्वामिने दर्शयित्वा ; l. 12, ग्रहस्वामिसमक्षद्रव्यस्थापनम् for ग्रहस्वामिनः समक्षं द्रव्यस्थापनम् .

P. 18, l. 3, omitted ; l. 4, words in quotations omitted.

P. 19, l. 1, अवतिष्ठति for अवतिष्ठते ; l. 5, नावज्ञया for नावज्ञाय ; l. 9, आदद्यं for अदेयं ; l. 10, वेदविक्रयलब्धमेतदिति यन्निर्दिश्यते व्यपदिश्यते तत्तथा for the sentence in the text. l. 11, interpolates धनं between आर्जितं and स्त्रीव्यापार .

P. 20, l. 3, भवति for न भजते ; l. 10, तिलान् मधु for तिलान् दधि ; l. 11, तेषामन्नं निवेदयेत् for तेषामन्यन्निवेदयेत् ; l 13, तेषां सर्वान्त्रसांश्चापि for तथा सर्वानिमांश्चापि.

P. 21, l. 3, गृहं for गेहं ; l. 4, विभक्त for विविक्त; l. 11, जीर्णा निर्मोकनिर्मुक्तः for जीर्णो निर्मोकनिर्मुक्तः ; l. 14, सहस्रसः for सहस्रशः.

P. 22, l. 3, स्नापनं सर्वदेवानां for माल्यप्रदानां देवानां ; l. 4, द्विजोच्छिष्टापसारणम् for द्विजोच्छिष्टापकर्षणम् ; l. 7, गण्डूयनं for कण्डूयनं ; अभिनन्दने for अभिवन्दने ; l. 13, तर्हि for तदा ; l. 15, परिददाति for ददाति ; l. 16, omits यच्च before स्मयदानम्.

P 23, l. 2, अवजानीते for अवज्ञायते ; l. 4, अध्रुवमफलं भवत्यल्पफलं वा तद्योदानं for अध्रुवफलं वा ; l. 5, omits तदादानम् ; l. 14, नरकं for निरयम्.

P. 24, l. 1, अस्खलितं यदि for स्ववेलितं ; l. 10, यो ब्रूयाद्रव्यमौ for यः कुर्याद्रव्यमौ.

P. 25, l. 6, विप्रहीनस्य for विप्रहीणस्य ; l. 8, हरेयो वै for हरते यो वै ; l. 13, ब्रह्मते for ब्रह्मगते.

P. 26, l. 1, अथ पात्रापात्रलक्षणम् for अथ पात्राणां लक्षणम् ; l. 14, योनिमित्रं for योनिमन्तम्.

P. 27, l. 13, ध्यानविच्च यः for ध्यानवित्तमः ; l. 15, सुव्रताश्च for सुवृत्ताश्च ; l. 16, ध्यानयुक्ताः for शान्तिमन्तः.

P. 28, l. 4, वेदेन्धनसमृद्धेषु for वेदेषु च समिद्धेषु ; l. 4, विप्रमुखाग्निषु for विप्रमुखादिषु ; l. 5, किल्बिषादपि for किं द्विषादपि ; l. 7, वै for च ; l. 8, तं पात्रं for सत्पात्रं ; l. 15, शुभकारकम् for शुभकर्मणि.

P. 29, l. 5, शातातपो दानव्यासश्च प्रथमे for शातातपो दानवर्षप्रथमे ; l. 6, सुभुक्तं for प्रभुक्तं ; l. 7, न तु मूर्खे for अनन्तवर्षे ; l. 10, दानव्यासः for दाने व्यासः ; l. 11, यत्किंचित् for एकोऽपि.

P. 30, l. 3, स्वदारनिरतो for स्वाध्यायनिरतः ; l. 6, विन्दति for वीक्षते ; l. 9, निवृत्तो for निवृत्तं ; l. 15, ततः परम् for ततः परः.

P. 31, l. 4, निसृतः for निर्वृतः ; l. 5, यः for वा ; l. 7, वेदवेदार्थतत्वज्ञः for वेदवेदाङ्गतत्वज्ञः ; l. 8, प्राप्तः for प्रोक्तः ; l. 17, समुच्छ्रितः for समन्वितः.

P. 32, l. 4, वा for च ; l. 5, वृत्रवतामिति for वृत्तिवतामपि ; l. 6, योक्तव्यो for नियुक्तो ; l. 9, अर्थार्जनादिज्ञानम् for अर्जनादिज्ञानम्.

P. 33, l. 1, अत्र चात्मोत्कर्षप्रकाशं for ब्राह्मणोत्कर्षप्रकाशनं ; l. 4, ज्ञानं शुचिः धृतिः for शौचं स्वधीर्घृणा ; l. 5, विनयमस्तेयम्

for विज्ञानमास्तिक्यं ; l. 7, तपो for क्षमा ; l. 10, श्रुतं for श्रुतिः ; l. 12, केचित्तु ब्रुवते विद्या for कश्चिद्ब्रूते.

P. 34, l. 2, मेध्यमानवः for मेध्य एव सः ; l. 3, अग्निवत् for दैवतमपि ; l. 5, द्वितीयश्श्लोके for द्वितीयश्चैके ; l. 5, अननुवाक्या for अननूचाना ; l. 7, नानृग् ब्राह्मणो भवति न वणिक्कुशीलवः ; l. 8, न शूद्रप्रेषणं कुर्वन् ; l. 9, अव्रता for अब्राह्मणः ; यत्र भैक्ष्यचरा द्विजाः for भैक्षमात्रं चरेद्द्विजः ; l. 10, चोरभक्तप्रदो for चौरवृत्तिप्रदः ; l. 14, बहुयाज्यस्स्यात् for बहुयाज्यश्च.

P. 35, l. 1, पञ्चमस्तु हृतस्तेषां for पञ्चमस्त्वधिभूस्तेषां ; l. 7, ये च केचिदनम्नायां for ये च केचन मानवाः ; l. 10, यमः for मनुः.

P. 36, l. 6, समं for शतम्.

P. 37, l. 3, षड्गुणं for अनन्तं ; l. 9, पुनः for स्मृतम् ; l. 10, 'दक्षः' omitted ; l. 11, substitutes व्यसनापहणार्थं च कुटुम्बार्थं च याचते ; l. 13, संस्कारोद्वाहनादिभिः for संस्कारैः ब्राह्मणादिभिः ; l. 14, न तश्श्रेयो for न तपः.

P. 38, l. 16, भिक्षमाणेभ्यः and इतरेभ्यः for भिक्षमाणेषु and इतरेषु.

P. 39, l. 4, सुब्राह्मण for स्वब्राह्मण ; l. 16, स्वदुहितृणामातरश्च after पात्रम् before पुरोहितः.

P. 40, l. 1, दानव्यासः for दाने व्यासः ; l. 13, गुणातिशयशालिनः for गुणातिशयेन.

P. 41, l. 2, omitted ; l. 5, भवन्त्येते for भवन्त्यर्थे ; l. 19, नास्ति मूर्खे व्यतिक्रमः for न मूर्खस्य व्यतिक्रमः.

P. 42, l. 4, यश्च for यथा ; l. 7, महद्धा for सहसा ; l. 10, द्विजेऽनृचे for द्विजे नरे ; l. 17, मुमूर्षूनपि गोपते for मूर्खानपि गोपते.

P. 43, l. 2–4, मूर्खातिक्रमे दोषता तस्य नास्ति मूर्खेभ्योऽतिक्रम इति व्यासादिभिरभिधानात् । सुमूर्खानिति सम्बन्धिदौहित्रादीनामेव विशेषणम्; l. 13, तं तस्करमर्चयेत् for तं हि सुखमानयेत्.

P. 44, l. 5, द्रविणं तैव दातव्यं for द्रविणं तैर्न दातव्यं; l. 10, दानविषयः for दानविशेषविषयः; l. 13, उपरुन्धति for उपप्लवन्ति; l. 15, omits पुनः सद्विप्रविषयः.

P. 45, l. 4, शौचहीनास्तु for शौचहीनाश्च; l. 7, त्रिषु नाशो for वित्तनाशः; l. 16, त्रिष्वत्येते तु यद्दत्तं for शिष्टेष्वेतेषु यद्दत्तम्.

P. 46, l. 4, मनुर्विष्णुश्च द्वितीयवर्ग्यै for मनुर्विष्णुश्च; l. 10, बकव्रतधरो for बकवृत्तिधरः.

P. 47, l. 1, रक्षेत् for वक्ष्ये; l. 6, गत्वा for मत्वा; l. 6, प्रत्यायेत्तु यः पुनः for प्रणमेत हि यः पुनः; l. 9, दानव्यासः for दाने व्यासः; l. 12, युक्तः for मुक्तः; l. 13, omits स्मृतिः.

P. 48, l. 1, त्रिपौरुषं for त्रिपूरुषम्; l. 2, नाम for ज्ञेयो; l. 5, मल्ले च for मत्ते च; l. 6, चौरेषु for चौरेभ्यः; l. 10, reads—श्रीलक्ष्मीधरविरचिते कृत्यकल्पतरौ दानकाण्डे पात्रनिरूपणम्.

P. 50, l. 1, The following verses occur before तथा—

सर्वाण्येतानि कृतवान् पुरा शम्बरसूदनः ।
वासुदेवश्च भगवान् अम्बरीषश्च पार्थिवः ॥
कार्तवीर्यार्जुनो नाम प्रह्लादः पृथुरेव च ।
कुर्युरन्ये महीपालाः केचिच्च भरतादयः ॥

तथा—ll. 4, the sixth line ( तस्मादाराध्य गोविन्दं ) is brought up as line 4 and the fifth line ( न शक्यमन्यथा ) is omitted; l. 12, पर्वं for सर्वा; l. 13, यज्ञोत्सव for यात्रोत्सवं.

P. 51, l. 1, वस्तु for वसु ; l. 3, heading omitted ; l. 4, पुण्यं तिथिमथासाद्य ; l. 11, ब्रूयात् for कुर्यात् ; l. 12, इत्युक्तस्मरणात् for इत्यङ्गुलीसंयुक्तस्मरणात् ; शोभनानि द्वाराणि comes between भद्राणि and आननानि.

P. 52, l. 2, वेदी for वेदिः and कराथवा for कराश्रया ; l. 5, omitted ; l. 14, एतेषां for एते.

P. 53, l. 16, शालेङ्गुदी for शाकेङ्गुदी.

P. 54, l. 4, यथोत्तरङ्गं च तदङ्गमेव ; l. 7, समानजातिश्च for तदङ्गजातिश्च ; l. 12, अङ्गुलमानं for अङ्गुलिमानं ; l. 13, अङ्गुलमानं for अङ्गुलिमानं ; l. 14, नि(मि)नुयात् for लक्षयेत्.

P. 55, ll. 3–4, words in brackets supplied.

P. 56, l. 13, omits अष्टानां ; l. 14, वेदमन्त्रैः for मन्त्रवेदैः ; l. 15, वेदचतुष्टयसम्बन्धात्वमानां for वेदचतुष्टयसाध्यत्वाद्धोमानां ; l. 18, धूपम् for धूपान्.

P. 57, l. 6, तेजोवता लोकगणेन for तेजोबलाल्लोकगणेन ; l. 12, नमः for नः ; l. 16, शुभाधिनाथ for शुभादिनाथ.

P. 59, l. 9, मितप्रभावो for मितप्रभाव ; l. 10, रक्षाध्वरं for विशाध्वरं ; l. 15, मनवो for मुनयः.

P. 60, l. 2, omits इति ; l. 12, अनुमन्त्रयेत् for अनुवर्तयेत्.

P. 61, l. 7, खड्गचर्मकवचः for चर्मकवचोपेतः ; l. 8, हैमं सूर्येण संयुतम् for हैमसूत्रेण संयुतम् ; adds सूर्येण हैमेनैव as explanation ; l. 14, साक्षिभूते for शक्तिभूते.

P. 62, l. 5, तेषामनुज्ञानं for तेषां अनुज्ञां च ; l. 6, विशिष्टादीन् for विशिष्टान् हि ; l. 9, तदनुज्ञाय for तदाज्ञया ; l. 10, inserts अपि after विशिष्टेभ्यः ; l. 10, अथ ब्राह्मणा for अब्राह्मणा ; l. 12, धारयेद्गेहे for धारयेद्देहे.

P. 63, l. 2, वसेत् for व्रजेत् ; l. 5, महीयते for स मोदते ; l. 14, इति तुलापुरुषदानविधानम् for इति तुलापुरुषदानविधिः ; l. 15, अथ हिरण्यगर्भदानम् for अथ हिरण्यगर्भदानविधिः.

P. 64, l. 4, वादनं for वाहनं ; l. 9, दात्रं सूची for दानसूची ; l. 15, पार्श्वयोः for पार्श्वतः ; l. 15, स्थापयेत्तद्वत् for स्थापयेद्धीमान्.

P. 66, l. 19, पुण्येऽह्नि विनिवेदयेत् for पुण्येऽहनि निवेदयेत्.

P. 67, l. 12, इति हिरण्यगर्भदानम् for इति हिरण्यगर्भदानविधिः.

P. 68, l. 2, शकलद्वयसंयुक्तं for कलशद्वयसंयुक्तं adds the explanation 'शकलद्वयसंयुक्तं' खण्डद्वयसंयुक्तम्.

P. 69, l. 7, त्रिः कृत्वा for दिक्कृत्वा.

P. 70, l. 3, होमं for देये ; l. 4, विधानयुक्ताः for विधानयुक्त्या ; l. 9, निर्धूतकल्मषविभुश्च तनुर्मुरारेः for the line.

P. 71, l. 9, कुर्यात् for कृत्वा ; l. 14, अर्धक्लृप्तसुवर्णस्य for ततस्तप्तसुवर्णेन.

P. 73, l. 6, पुरुषोऽव्ययः for पुरुषोत्तमः.

P. 74, l. 11, वा for च.

P. 75, l. 4, दशसहस्राधिकम् for दशसहस्रकम् ; l. 9, ताम्रदोह for कांस्यदोह.

P. 76, l. 13, मेऽग्रतः for ममाऽग्रतः

P. 77, l. 14, पुत्रपौत्रसमन्वितम् for राजराजो भवेन्नरः ; l. 15, omits तथा.

P. 78, l. 2, प्रदं श्रुतम् for प्रदर्शनात् ; l. 9, अनुभवति मदं वा for अनुभवति सुवासं ; l. 15, सर्वकामप्रदं for सर्वकामफलम्.

P. 79, l. 2, वेदिकाम् for वेदिकाः ; l. 8, वियां कृष्णाजिनं न्यस्य for वेद्यां कृष्णाजिनं न्यस्य.

P. 80, l. 1, कुस्तुम्बर for कुस्तुम्बुरु ; l. 3, घण्टामणित्रि for मणित्रि ; l. 5, कुस्तुम्बरु for कुस्तुम्बुरु ; l. 17, substitutes आसाह्निको भवदुःखमुपैति मर्त्यः.

P. 81, l. 3, वेदपुङ्गवः for वेदपुङ्गवैः ; l. 13, शष्यादिकं for सस्यादिकम्.

P. 83, l. 6, सकलकलुषमुक्तः for कलिकलुषविमुक्तः ; l. 8, पूज्यतो for पूजितः.

P. 84, l. 7, कूबरो युगधाराष्टकम्.

P. 85, l. 11, भवाभिधाय for भवाभवाय.

P. 86, l. 4, अखण्डमचण्डभानोः for अखण्डलचण्डभानोः; l. 8, प्रदानमेव for प्रदानमस्मिन् ; l. 11, इति हिरण्याश्वदानम् .

P. 87, l. 7, adds क्रीडार्थो रथः ; l. 11, असन् चन्दनैः for अशनचन्दनः ; l. 18, सुरूपतः for स्वरूपतः ; l. 19, कुर्यात्पञ्चपलादूर्ध्वं for कुर्यात्त्रिपलादूर्ध्वम् .

P, 88, l. 7, तस्मात् for यस्मात् ; l. 11, रथेऽधिरुढ for रथाधिरुढ.

P. 90, l. 1, सारदानुमयान् for सारदारुमयान् ; l. 8, खातिकान्वितम् for खातकान्वितम् ; वसति ग्रामसंज्ञिता for वसतिः ग्रामसंज्ञितैः ; l. 13, युक्तान् for युतान् ; l. 17, substitutes पर्जन्यादित्यरुद्रेभ्य इति विहितस्य पायसचरुप्रभृतेः होमतल्लिङ्गैः मन्त्रैः पलाशसहितं चाऽऽज्यं कृष्णतिलां तथा.

P. 91, l. 5, अभिपूजयेत् for प्रपूजयेत् ; l. 10, words in brackets missing.

P. 93, l. 6, मर्यादापर्वतवतं for मर्यादापर्वतवतीम् ; ll. 10–13. verses in brackets supplied ; l. 17, यथा for तथा.

P. 94, l. 12, अबले for अनघे.

P. 95, l. 11, सम्प्राथ्यमाणः for सन्तर्प्यमाणः ; l. 13, omits इति पृथिवीदानम्.

P. 96, l. 1, विश्वचक्रं तु कारयेत् for विषुवादिषु कारयेत् ; l. 2, ज्येष्ठं for श्रेष्ठं ; l. 5, भ्रमन्नेम्यष्टकावृतम् for रत्नकुम्भाष्टकावृतम् ; l. 10, बुधः for बुद्धः ; l. 18, ब्राह्मण्यायाः for ब्रह्मण्यायाः.

P. 97, l. 1, अन्तराणां मध्ये for अन्तरालानां मध्ये.

P. 98, l. 3, संख्यैः शिष्टैः for संघैः तिष्ठेत् ; l. 10, ससुदर्शनतां for असुदर्शनताम्.

P. 99, l. 14, शुभे for उभे.

P. 100, l. 15, उदीरयेत् for उदाहरेत्.

P. 102, l. 8, रत्निरङ्गुष्ठपूर्वाणि संख्यया त्वेकविंशतिः । तदर्धं प्रादेशः.

P. 103, l. 2, स च होमोऽधिकः सर्वशेषे कर्त्तव्यः ; l. 9, वसुभिश्च for पशुभिश्च.

P. 104, l. 8, अथ रत्नधेनुदानविधानम् ; l. 17, तद्वत् for सद्यः.

P. 105, l. 1, omitted ; l. 10, ते for च ; l. 12, परिकल्पयेत् for परिकल्पितम्.

P. 106, l. 6, विवचनां for विरचनां ; l. 12, युक्तां for युक्ते ; l. 16, पुण्यमाप्य.

P. 107, l. 5, रत्नधेनुप्रदानम् ; ll. 6–16, omitted.

P. 108, ll. 1–5, omitted.

P. 109, l. 5, सर्वभूतेश for सर्वभूतेषु ; l. 11, प्रजायते for अभिजायते ; l. 18, षोडशमहादानानि for दानकाण्डे षोडशमहादानपर्व.

P. 110, l. 1, पद्मपुराणे ब्रह्माण्डदानविधिः for पद्मपुराणोक्तं ब्रह्माण्डदानम् ; ll. 12–15, all words after लक्ष्म्या omitted.

P. 111, l. 9, यादसानि च for या वृषाणि ; l. 9, राजसान्येव for राजतानि च ; l. 9, adds अरण्यानि च सह्यानि सौवर्णानि तु कारयेत्.

P. 112, l. 1, चतुर्थाङ्ग for चतुर्दश ; l. 2, अहतविरसञ्छन्नाः for ईहितं चरमस्था च ; l. 10, जनार्दनः for जनार्दन ; l. 17, नराधिपः for नराधिप ; l. 23, भीमद्वादशी for भीमद्वादशी.

P. 113, l. 2, सलोकताम् for सलोकता ; l. 3, इति ब्रह्माण्डदानम् ; l. 4, omitted ; l. 5, omits तत्र ; l. 12, सरसिजं for सदक्षिणम्.

P. 114, l. 8, पुनः for दिशम् ; l. 16, मुख्योदकहस्ताभ्यां for मुख्योदरसहस्ताभ्याम्.

P. 115, l. 5, दृष्टान्तार्थः for दृष्टान्तः ; l. 20, adds at the end क्षीरादिस्नपनप्रकारेण.

P. 116, l. 3, यं तु for जन्तु ; l. 6, इति त्रिःप्रकारं गोसहस्रदानम् ; l. 7, आदित्यपुराणे.

P. 117, l. 10, अनन्तं तस्य for अनन्तस्य ; l. 13, विप्रान् for गावः.

P. 118, l. 1, इति गोसहस्रदानम् before तथा ; l. 16, omitted ; l. 17, महाभारते.

P. 120, l. 13, heading omitted.

P. 121, l. 2, विवाहोत्सवयज्ञेषु ; ll. 9–11, omitted ; l. 13, comes after prose passage ; l. 14, omits पुंसः.

P. 122, l. 7, मुरारिः for पुरारिः.

P. 123, last line omitted.

P. 124, ll. 5–6, omitted up to गन्धमदनः.

P. 126, ll. 4–5, third and fourth quarters missing; l. 13, शक्तितः for अथवा; ll. 16–18, omitted.

P. 128, ll. 5–7 omitted; l. 15, तस्मादन्तरसाः for यस्मादन्न-रसाः; l. 15, लवणाद्विताः for लवणं विना.

P. 129, l. 10, हेमवृक्ष for होमवृक्ष.

P. 130, l. 1, यथा for तथा; l. 2, adds—यस्मात्सौभाग्यदायिन्य-पात्रता तु गुड० ; l. 9, अथ सुवर्णाचलदानम्; l. 12, यस्य प्रदानात् for यस्य प्रसादात्.

P. 131, l. 2, अवरः for अधमः; l. 13, इति पर्वतदानम् for कनका-चलदानम्; l. 14, अथ तिलशैलदानम्.

P. 132, l. 15, इति तिलपर्वतदानम्; l. 16, अथ कार्पासाचलदानम्; but the entire section is omitted upto घृताचलदा-नम् on p. 133.

P. 134, l. 10, in brackets, omitted.

P. 135, ll. 1–3, omitted; l. 4, इति घृतपर्वतदानम्.

P. 136, l. 4, विसर्जनम् for विसर्जयेत्; ll. 6–7, transposed; l. 9, omitted; l. 11, placed after line 14; l. 13, placed after lines 14 and 11.

P. 137, l. 4, द्विजोत्तमः for द्विजोत्तम; l. 16, विभूषणैः for विलेपनैः.

P. 138, l. 6, इति रजतशैलदानम्; l. 18, निवेशयेत् for निवेदयेत्.

P. 139, l. 9, विष्णुपुरं व्रजेत् for विष्णुप्रचोदितः.

P. 140, l. 1, जन्मार्बुदत्रयम् for जन्मायुतत्रयम्; l. 4, सर्वतोपस्करान् for पर्वतोपस्करान्; l. 10, पठ्यमानः for प्रठ्यमानैः; l. 14, omitted; ends thus: इति श्रीमल्लक्ष्मीधरविरचिते कल्पतरौ दानकाण्डे पर्वतदानानि.

P. 142, l. 13, श्रियः for श्रिये.

P. 143, l. 14, यथा श्राद्धं for यथा श्रद्धा.

P. 144, ll. 2–3 omits द्रव in द्रवद्रव्य and यत्र पद्मपुराणादौ एकेनैव घटेन घृतादिधेनुकथनं ; l. 9, omits तत्रैव ; l. 14, सर्वेषु for समेषु ; l. 15, given after l. 1, on p. 145.

P. 145, l. 4, षौडशाष्टमयी for षोडशाढमयीं ; l. 8, ईदृशं for ईदृशीं ; l. 13, मन्त्रसूतां for मन्त्रमुक्त्वा.

P. 146, l. 9, इति पञ्चधेनुदानम्.

P. 147, l. 4, निर्ऋणो for प्रयतो ; l. 7, देवं देवीं for देवदेवीं ; l. 8, विचित्रितैः for विचक्षणः ; l. 13, सुशोभनां for सुशोभितां ; l. 15, कम्बलः for कङ्कणं ; l. 17, चारुपत्रमयैः for चारुसूत्र-मयौ ; l. 19, समर्पयेत् for समर्चयेत् ; l. 20, विभूषितम् for विभूषणाम्.

P. 148, l. 3, यावन्ति for यावांश्च ; l. 6, अविचारणात् for अविचारतः; l. 8, adds इहैव तेजसा युक्तो वसुपुत्रसुखान्वितः । पुनर्दैव्यां रतो नित्यं पूजयेत् विधिना च तम् ; ll. 11–12, omitted ; l. 17, गन्धस्य सर्पिषा for गन्धस्य सर्पिषः.

P. 149, l. 6, अगुरु for अगरु ; l. 12, मङ्गला शास्त्रपारगे for सर्पिषा धेनुरुत्तमा ; l. 14, चर्चिका उमा for चर्चिता तु सा ; l. 15, नन्दां मनोनुगाम् for मन्त्रमनोनुगाम् ; l. 17, अमुना for शुभा.

P. 150, l. 4, विंशकम् for विंशतिम् ; l. 6, धेनोस्तावदुदाहृता for येनोक्ता बहुधा कृता ; l. 8, omits देवीपुराणोक्तं ; l. 9, omitted. l. 13, शङ्ख for क्षीर.

P. 151, l. 1, विधानेनोपकल्पयेत् for धान्यानां च प्रकल्पयेत् ; l. 6, शुभदे for सभगे ; l. 8, शिवा for शुभा ; l. 12, प्रपां सभां तडागं च कूपं वाऽपि सुपुष्कलम् ; ll. 13–14, substitutes,

like Hēmādri, p. 401, कृत्वा कुम्भान् सुवर्णांश्च गन्धमाल्यैरलङ्कृताम्। 'प्रपा' पानीयशाला। 'शाला' सभाजनसमाश्रया।'सुवर्णान्' शोभनवर्णान्.

P. 152, l. 3, कामदः कामदानाय for कामदा मम कामाय ; ll. 8–9 omitted; l. 13, omitted.

P. 153, l. 1, तिलैराकीर्य for तिलैरापूर्य ; l. 4, प्रयच्छेयः for प्रयच्छंस्तु ; l. 6, तावत्कोटि for तिलकोटि ; l. 11, कारण for काञ्चन.

P. 154, l. l. 8–10, omitted ; l. 11, adds 'कांस्योपधानसंयुक्तं' कांसपात्रपिहितम्.

P. 155, l. 17, स पुण्येषु प्रमोदते for मोदते त्रिदशैः सह.

P. 156, l. 7, देवाग्रे for देवाय ; l. 10, अपारधाद्विशाम्नेयं ?

P. 157, l. 5, adds भानुरुवाच ; l. 12, वस्त्रोपशोभितम् for वस्त्रोपवीतिनम् ; l. 13, दर्भविष्टरसंयुतम् for यानं विष्णुरथे स्थितम्.

P. 158, l. 7, रोमतुल्यानि for रोमसंख्यानि ; adds यमः before रुक्मशृङ्गीं on l. 18, and दक्षः before दत्त्वा द्विजेन्द्राय on l. 20.

P. 159, l. 1, omitted ; l. 7, omits यो दान्तं वृषभं ददाति स च ; l. 10, जाबालः for जाबालिः ; l. 11, अयाचितम् for यथाविधि l. 13, देवीपुराणे for वायुपुराणे ; ll. 15–18, omitted.

P. 160, l. 1, omitted l. 14, तावदब्दानि वसति for तावदब्दसहस्राणि

P. 161, l. 17, मातृकं पितृकं च यत् for पापं मातृकं भवेत् ; l. 18, जलधृतस्यं हस्तेऽस्य for यश्च जन्मशतैस्तस्य.

P. 162, l. 6, प्राज्ञो for प्रोक्तो l. 10, अग्निनेवेन्धनम् for आसप्तमं कुलम् ; l. 17, शोभिताम् for संयुताम्.

P. 163, l. 5, कपिलागोदानमाहात्म्यम् before महाभारते ; l. 9, omitted ; l. 14, शबला शर्करा ; l. 15, adds सुव्रतां वस्त्रसंवीतामग्निलोके महीयते ; l. 18, धूसरवर्णा for धूम्रवर्णा.

P. 164, l. 3, कांस्यदोहनाम् for गां पयस्विनीम् ; वारुणं for कौबेरं ; l. 15, सुव्रतां for सुवस्त्राम्.

P. 165, l. 2, सर्वरत्न for वस्त्रवत्स ; l. 22, यथाऽमरः for यथा नरः.

P. 166, l. 3, omitted ; l. 14, omitted.

P. 167, Last three lines and the first four on the next page are omitted.

P. 170, l. 1, omitted ; l. 5, स तैः for सह.

P. 171, ll. 5–6, omitted ; l. 8, विद्धिकौशिक for वृद्धकौशिकाः.

P. 172, l. 1, तथा omitted ; सबले for समङ्के.

P. 173, ll. 12–13, omitted.

P. 174, l. 7, कर्मोपवाह्यः for कर्मोपवत्यः.

P. 175, l. 10, शीली for शाक्ती ; l. 14, दान्तवृषः for दान्तबुद्धिः ; 'वसु' धनं ; l. 15, उषसि ऊढा आवाहयिता गायत्र्या इत्यर्थः.

P. 176, l. 18, omitted ; Ms. roughly confirms text.

P. 177, l. 8, and l. 14, शिवभावने for शिवभाविने.

P. 178, l. 3, साधुवाहिनम् for साधुवाहनम्.

P. 179, l. 4, prefixes तथा

P. 180, l. 18, कृष्णमार्जकम् for कृष्णमार्गणम्.

P. 184, l. 2, कुलदेव for बलो देवः.

P. 185, l. 16, पूज्ययुग्मेन for सूक्ष्मसूत्रेण.

P. 188, l. 1, वराश्वावरवारणाः for वराः प्रावरणाः कृताः ; ll. 12–14, omitted.

P. 189, l. 2, शतम् for समम्.

P. 190, l. 5, क्षिति for क्षति.

P. 191, l. 2, सस्यदायिनम् ; l. 5, महामनाः for महात्मने ; l. 6, विगतपापकः ; for विगतपातकः.

P. 192, l. 11, बहुवीर्यसमर्जिताम् for बहुबीजसमन्विताम्.

P. 194, ll. 10–11, omitted.

P. 195, l. 7, अमन्त्रार्थं मलोज्झिताम् for मङ्गलार्थमरोगतः.

P. 196, l. 12, मानसोपस्करं for यानं सोपस्करं ; l. 14, भूयशः for भूरिशः ; l. 17, पण्यौषधि for पुण्योषधि.

P. 197, l. 10, समाप्नुयात् for समश्नुते ; l. 17, कथञ्चन for काञ्चनम्.

P. 198, l. 15, अधिकं स्मृतम् for परमं स्मृतम्.

P. 200, l. 5, मनुः for तथा.

P. 201, l. 14, पदम् for फलम् ; l. 17, omits तथा.

P. 202, l. 14, धनुर्हस्त for चतुर्हस्त.

P. 204, l. 5, नटनर्तकनग्नैश्च for नटचारणनग्नैश्च ; l. 9, सम्पाद्य for निष्पाद्य ; l. 12, सप्तपञ्चत्रिभूमिकम्.

P. 205, l. 5, परिलेखयेत् for परिकल्पयेत्.

P. 206, l. 17, तमुद्दिशेद् for तमनुव्रजेत्.

P. 207, l. 11, योऽदधात् for यो ब्रूयात्.

P. 209, l. 7, ब्रह्मविद्यां for शिल्पविद्याम् ; l. 8, आप्नुयात् for अश्नुते ; l. 10, कामसम्भवः for कामसंयुतः ; l. 22, omits तथा.

P. 211, l. 8, गुणाधिकम् for गुणान्वितम्; l. 11, निरुप्यते for निरुध्यते; l. 18, प्रपूजयेत् for प्रसादयेत्; l. 19, स्रग्वासोभूषणैः for सुधांशोर्भूषणैः.

P. 212, l. 6, वरान् सुहृत् for च मे सुहृत्; l. 13, वर्णमात्रेण योऽज्ञेन for वस्तुमात्रेण यो ज्ञानम्.

P. 213, l. 1, prefixes तथा; l. 5, सत्पात्रेभ्यः for सगोत्रेभ्यः; l. 17, सङ्कोचयन्त्रसंयुक्तं for सत्काचवस्त्रसंयुक्तम्.

P. 214, l. 2, सुलक्षलघुरत्यन्तं for सूक्ष्माक्षरं च रम्यम्.

P. 215, l. 13, नानार्थोक्त्या for ऊनार्थोक्त्या.

P. 216, l. 17, फलमिच्छुता for फलमश्नुते.

P. 217, l. 8, सर्वार्थवित् for शब्दार्थवित्.

P. 218, l. 1, अनक्षरं for अलङ्कारं; l. 16, परित्यागेन रोधयेत् for परित्राणेन चोद्धरेत्.

P. 219, l. 15, वितानेभ्यो रतस्य च for ज्ञानं नित्यं रतस्य च; l. 17, साधकम् for साधनम्.

P. 220, l. 6, निवारणम् for विरामणम्; l. 12, विभावितैः for विभाषितैः; l. 14, यथावस्तु for कथावस्तु.

P. 221, l. 1, यथाकथञ्चित् शृणुयात् for कथां च कश्चिच्छृणुयात्; l. 3, शास्त्रवर्गे for शास्त्रसङ्गे; l. 6, पितृवञ्चिकार्थी for पितृवञ्चिकामम्.

P. 222, l. 7, सकुलो मोदते दिवि for स्वर्गलोके स मोदते; l. 13, स धन्यः स कीर्तिमान् for अक्षयान् भोगसत्तमान्; l. 16, स धन्यः स कीर्तिमान् for मर्त्याः पुण्यभाजो महाधियः.

P. 223, l. 7, प्रदर्शितः for प्रकीर्तितः.

P. 224, l. 1, वैष्णवं परमं विदुः for तदुक्तं वैष्णवं विदुः.

P. 225, l. 2, 'इषे' आश्वयुजे ; l. 13, जगत्स्थितिः for जगत्स्थितः.
P. 226, l. 1, मुहुः for बहुः ; l. 10. तिलधेनु for तिलकुम्भ.
P. 227, l. 1, omitted.

P. 228, l. 1, अखिला for अमुना ; l. 2, omitted.

P. 229, l. 8, गौरवः for रौरवः ; l. 13, प्रजायते for प्रजापतेः.

P. 231, l. 5, सुवर्णनाद for सुवर्णनाभ ; l. 8, omits सर्वगन्धैः ; l. 10, omits दीप ; सूक्तैः for शाकैः ; l. 15, omits सर्वजनप्रियो भवति ; l. 18, omits भर्त्तारं तादृग्गुणयुक्तम्.

P. 232, l. 6, नगराधिपत्यं for गणाधिपत्यं ; l. 11, अश्विनीयुतायां for अश्विनीगते चन्द्रमसि ; l. 12, युक्ता for युता स्यात् ; ll. 15–17, omitted.

P. 233, l. 6, तैलतुलां साष्टां for घृततुलां अष्टाधिकां ; l. 10, prefixes यमः ; l. 14, तथा for यमः.

P. 234, l. 4, मामेव तु for मामत्वम्.

P. 235, l. 10, स्व for स्वान् ; l. 13, omits इति तिथिदानम्.

P. 236, l. 1, अथ मासदानानि ; l. 5, omits प्रत्यहं ; l. 7, adds स्वर्गलोकं गच्छति ; l. 9–12, omitted.

P. 237, ll. 9–13, omitted.

P. 238, l. 1, पुनः for मुने ; l. 6, सुमनोरमान् for सुमनोहरान् l. 9, प्रतिमाष्टाङ्गुलोत्क्षेप for प्रतिमास्ताङ्गुलोत्क्षेप.

P. 239, l. 15, सदा for तथा ; l. 18, च भक्तितः for स्वशक्तितः.

P. 240, l. 7, मणिमुक्ताफलादिकम् for मणिकामुक्तादिकं तथा ; l. 14, सर्वकामिकम् for सर्वकालिकम् ; l. 15, किञ्चित् for लोके ; l. 17, omits इति मासदानानि.

P. 241, l. 13, यवेन च ससर्पिषा for मासे यत्नेन सर्पिषा.

P. 242, l. 2, स्वर्गवासं for स्वर्गलोकं; l. 9, omits अकृतमघटितम्.

P. 243, l. 9, पुण्यगन्धाश्च for पुण्याङ्गां गां; l. 11, नन्दते तथा for नन्दने वने; l. 12, शतावथ for स्वातीष्वथ.

P. 244, l. 17, असंवृतान् for सुसंयुतान्.

P. 245, l. 2, वस्त्ररश्मिधरं सद्यः for वस्त्ररश्मिं नवं; l. 9, स पितॄन् प्रीणयति प्रेत्य for पितॄन् प्रीणाति सकलान्; l. 16, इति नक्षत्रदानानि.

P. 246, l. 4, गुणकरं for बहुगुणं; l. 8, म्रियते नरः for न हि जीवति; l. 14, omits तथा; l. 16; आत्मनस्तपः for आत्मनो यशः.

P. 247, l. 1, prefixes यमः.

P. 248, l. 5, उत for अलम्; l. 15, पात्रेभ्यः for विप्रेभ्यः.

P. 249, l. 15, omits इति अन्नदानम्.

P. 250, l. 7, प्राक्रमः for परायणः; l. 8, पर्णज्ञः for मर्मज्ञः; l. 10, योगिवत् देहिनां for योगवित् प्राणिनाम्.

P. 251, l. 3, अस्वतन्त्रं for अगदतन्त्रं; l. 18, omits इत्यारोग्यदानम्.

P. 254, l. 1, omits विष्णुः; l. 8, omits इति अभयदानम्.

P. 255, l. 2, निवेदयेत् for अतियोजयेत्; l. 14, ध्रुवा for बुधाः.

P. 256, l. 12, omits इति द्विजस्थापनम्.

P. 259, l. 8, omits नो; l. 9, adds मेलयित्वा after द्रव्याणि.

P. 260, l. 20, असिपत्रवनं for असिपत्रनयम्.

P. 261, slightly corrupt but better than other Mss.

P. 262, lacuna from धान्यप्रदानेन on line 4 to अश्वतरीयुतं रथम् on line 7.

P. 263, l. 2, फलोपगं वा for फलोपगन्धो ; l. 8, अवारितम् for अबाधितम्.

P. 264, l. 15, निवेदयेत् for दिने दिने ; l. 18, omitted.

P. 265, l. 6, omits मनुरुवाच.

P. 266, l. 16, पञ्च for पन्थाः.

P. 267, l. 10, छत्रा शतानि च for दानानि वा पुनः.

P. 268, l. 6, सलक्ष्मिवान् for सलक्ष्मवान्.

P. 271, l. 13, पात्रं in brackets supplied. ; l. 14, बुभूषताम्

P. 273, for बुभुक्षिताम्.

P. 272, l. 1, adds अन्तर्हिताभितृप्तानां अविभाविताभिलाषाणाम्.
l. 17, स्वन्दचाय (?) for मुकुन्ताय.

P. 274, l. 9, दिवमाप्नुयात् for दिवमाप्नुयुः.

P. 275, ll. 1–2 cited after line 8 ; ll. 3–4, omitted l. 5, शुभ for तत्तं ; ll. 7–12 omitted ; ll. 13–14,

इति सहृद्हृदयधरात्मजमहासान्धिविग्रहिक भट्टश्रीलक्ष्मीधरविरचिते कृत्यकल्पतरौ दानकाण्डे प्रकीर्णकदानानि ।

P. 276, l. 2, अथ वापीकूपतडागादिविधिः ; l. 9, प्रतिश्रयाश्च for प्रतिष्ठिताश्च.

P. 277, l. 6, omitted.

P. 278, l. 4, यथा for तथा.

P. 279, l. 1, substitutes शृणु राजन् महाबाहो तडागादिश्च यो विधिः.

P. 280, l. 8, अरत्निमात्रो for त्र्यरत्निमात्रो.

P. 281, l. 2, पूजयेच्च for दक्षयेच्च ; l. 7, प्रथमतः for प्रथमम्.

P. 282, l. 6, omitted ; l. 12, यजध्वं for पठध्वं ; l. 18, मन्त्रवत् for मन्त्रवित्.

P. 283, ll. 3–4, omitted. ; ll. 5–8 many omissions.

P. 284, ll. 4–5, पौरुषं.........त्पन्नं । सौपर्णानि omitted. ; l. 9, गायत्रं—इत्यादि omitted. ; ll. 12–16, all words ofter रथन्तरं omitted ; l. 17, adds here गजाश्वरथवल्मीक four lines lower down, instead of lines 18, and 19 which are omitted.

P. 286, l 3, omits तथा ; ll. 9–11 omitted.

P. 287, l. 15, वापीकूपतडागयज्ञं for वापीयज्ञम्.

P. 288, l. 7, तां तारयती for भावयन्तो ; l. 9, omits इत्यनेन and यजमानः ; and substitutes चारमुत्तीर्य for आचार्येण अन्वारब्ध उत्तीर्य ; l. 12, हिंकृतं for यदि वा हिङ्करोति ; l. 13, omits जपेत् तां ; l. 14, omits ताम्रपृष्ठीं ; l. 15, omits आचार्याय देया ; l. 17, omits यजमानो ; l. 19, omits conclusion.

P. 289, l. 1, अथ द्वारिबन्धः ; l. 6, तलखातं for ततः खातम्.

P. 291, l. 9, सुमनोहरम् for समहोरगम्.

P. 292, l. 14, धेनुपृष्ठे for बन्धपृष्ठे.

P. 293, l. 6, मतम् for भवेत्.

P. 294, ll. 5–6, omitted ; l. 18, धनम् for बलम् ; l. 19, वरम् for मतम्.

P. 295, l. 1, पश्चिमेन गर्तं for पश्चिमे सङ्गर्तं ; ll. 3–9, omitted ; l. 15, गुडादिभिः for गणादिभिः.

P. 296, l. 12, सुमङ्गलम् for च लक्षणम्.

P. 297, l. 5, भयावहम् for भयापदम्; l. 6, अथवा for तथा; ll. 10–11, interpolates तथा between the lines.

P. 298, l. 9, omitted; l. 11, स प्रायपक्षाश्रिता कान्ता for पक्षाश्रिता यथा कान्ता; l. 12, भूयायोक्तां for प्रपायोक्त्री; l. 18, वरम् for परम्.

P. 299, l. 5, विगतार्थं सदा नरः for विगतश्च सदा नरः; l. 7, सनिष्कुटे for मण्डपे; l. 22, omitted.

P. 301, l. 5, प्रतिपक्षम् for प्रतिपाद्यम्; l. 7, मुने for पुरे.

P. 302, l. 7, यथोच्छ्रितम् for तथोत्थितम्; l. 11, omitted; l. 12, तथा omitted.

P. 303, l. 3, यथा जायेत for तथा जायेत; l. 4, मन्त्रवित् for मन्त्रितम्; ll. 16–17, omitted.

P. 304, l. 5, युगार्बुदम् for युगाद्युगम्; l. 10, देव्यो नरः पापात् for दयान्नरस्सोऽपि.

P. 305, l. 3, तु भारत for भावयेत्.

P. 307, l. 7, adds सत्तीर्थे पुत्रतर्पणादिजन्यं तृप्त्यादिफलं रोपकस्य प्रय छन्तीत्यर्थः । The whole explanation, which is missing in other Mss. is reproduced by Hemadri; l. 13, adds 'चिञ्चा' अम्लिका; l. 14, अरलू for अरणू.

P. 308, l. 2, तित्रिडीको for तिन्त्रिलीकम्.

P. 309, l. 11, द्विजातयः for द्विजोत्तमान्.

P. 310, l. 5, सत्पुत्राणां for न पुत्राणां; l. 9, समं तरुः for समो द्रुमः; l. 10, omits इति वृक्षारोपणविधिः.

P. 311, l. 8, विविधैस्तथा for विविधैर्युतम्.

P. 312, l. 3, omitted; l. 7, तथा for अथवा.

# APPENDIX B

## १ बल्लालसेनकृत—दानसागरे

## उपोद्घातः प्रतिज्ञा च

*** ॐ नमो गणेशाय ***

ये साक्षादवनीतलामृतभुजो वर्णाश्रमज्यायसां
येषां पाणिषु निक्षिपन्ति कृतिनः पाथेयमामुष्मिकम् ।
यद्वक्त्रोपनताः पुनन्ति जगतीं पुण्यास्त्रिवेदीगिर-
स्तेभ्यो निर्भरभक्तिसम्भ्रमनमन्मौलि द्विजेभ्यो नमः ॥ १ ॥

इन्द्रो विश्वैकबन्धुः श्रुतिनियमगुरुः क्षत्रचारित्रचर्य्या-
मर्य्यादागोत्रशैलः कलिचकितसदाचारसाधारसीमा ? ।
सद्वृत्तस्वच्छरत्नोज्वलपुरुषगुणोच्छिन्नसन्तानधारा-
वर्षैर्मुक्तासरश्रीर्निरगमदवनेर्भूषणं सेनवंशः ॥ २ ॥

तत्राऽलङ्कृतसत्पथः स्थिरघनच्छायाभिरामः सतां
स्वच्छन्दप्रणयोपभोगसुलभः कल्पद्रुमो जङ्गमः ।
हेमन्तः परिपन्थिपङ्कजसरःसङ्घस्य नैसर्गिकै-
रुद्गीतः स्वगुणैरुदात्तमहिमा हेमन्तसेनोऽजनि ॥ ३ ॥

तदनु विजयसेनः प्रादुरासीद्वरेन्द्रो
दिशि त्रिदिशि भजन्ते यस्य वीरध्वजत्वम् ।
शिखरविनिहिताज्ञां वैजयन्तीं वहन्तः
प्रणतिपरिगृहीताः प्रांशवो राजवंशाः ॥ ४ ॥

सर्व्वाशाः परिपूरयन्नुपचितश्रीर्दानवारां घनै-
रासारैरभिषिक्तनिर्म्मलयशःशालेयभूमण्डलः ।
दैन्योत्तापभृतामकालजलदः सर्वोत्तरः क्ष्माभृतां
श्रीवल्लालनृपस्ततोऽजनि गुणाविर्भावगर्भेश्वरः ॥ ५ ॥

वेदार्थस्मृतिसङ्ग्रहादिपुरुषः श्लाघ्यो वरेन्द्रीतले
निस्तन्त्रोज्ज्वलधीविलासनयनः सारस्वतस्त्र्यम्बकः ।

षट्कर्माऽभवदार्य्यशीलनिलयः प्रख्यातसत्यव्रतो
वृत्रारेरिव गीष्पतिर्नरपतेरस्याऽनिरुद्धो गुरुः ॥ ६ ॥

अधिगतसकलपुराणस्मृतिसारः श्रद्धया गुरोरस्मात् ।
कलिकल्मषावसादं दाननिबन्धं विधातुकामोऽपि ॥ ७ ॥

दुरधिगमधर्म्मनिर्णयविषमाध्यवसायसंशयस्तिमितः ।
नरपतिरयमारेभे ब्राह्मणचरणारविन्दपरिचर्य्याम् ॥ ८ ॥

शुश्रूषापरितोषितैरविरतं सम्भूय भूदेवतै-
र्दत्तामोघवरप्रसादविशदस्वान्तस्खलत्संशयः ।
श्रीवल्लालनरेश्वरो विरचयत्येतं गुरोः शिक्षया
स्वप्रज्ञावधि दानसागरमयं श्रद्धावतां श्रेयसे ॥ ९ ॥

भूयो भूयः प्रणम्य क्षितिवलयमिलन्मौलिवन्द्या द्विजेन्द्राः
श्रीमद्वल्लालसेनः स्थिरविनयनिबद्धाञ्जलिर्याचते वः ।
काले काले भवद्भिः कृतसुकृतलवैः पालनीयो ममाऽयं
सामान्यः पुण्यभाजां भवजलधिमहासेतुबन्धो निबन्धः ॥ १० ॥

ब्राह्मं वाराहमाग्नेयं भविष्यं मात्स्यमेव च ।
वामनं वायवीयञ्च मार्कण्डेयं च वैष्णवम् ॥ ११ ॥

शैवं स्कान्दञ्च पाद्म  पुराणं कौर्ममेव च ।
पुराणानि तथा कूर्मपुराणादिपुराणयोः ॥ १२ ॥

उक्तान्युपपुराणानि व्यंक्तदानविधीनि च ।
आद्यं पुराणं शाम्बं च कालिकाद्वयमेव च ॥ १३ ॥

नान्दमादित्यसंज्ञञ्च नारसिंहं तथैव च ।
मार्कण्डेयकृतं तद्वद्विष्णुधर्म्मोत्तराह्वयम् ॥ १४ ॥

शास्त्रञ्च विष्णुधर्म्माख्यं गोपथब्राह्मणश्रुतिम् ।
श्रीरामायणमाख्यानं महाभारतसंहिताम् ॥ १५ ॥

मनुवासिष्ठसंवर्त्तयाज्ञवल्क्यञ्च गौतमम् ।
कात्यायनं च जाबाल्यं व्यासं दानबृहस्पतिम् ॥ १६ ॥

वृद्धवसिष्ठं हारीतं पुलस्त्यं विष्णुमेव च ।
शातातपं यमं योगियाज्ञवल्क्यं च देवलम् ॥ १७ ॥

बौधायनञ्चाङ्गिरसं दानव्यासं बृहस्पतिम् ।
द्वौ शङ्खलिखितावापस्तम्बं शाट्यायनं तथा ॥ १८ ॥
गद्यव्यासं लघुव्यासं लघुहारीतमेव च ।
छन्दोगपरिशिष्टं च कात्यायनमशेषतः ॥ १९ ॥
इत्यालोच्य पुराणोपपुराणश्रुतिसंहिताः ।
समाहृतानि दानानि निबन्धस्याऽस्य सिद्धये ॥ २० ॥
महादानानि कीर्त्यन्ते तत्राऽऽदौ षोडश क्रमात् ।
पर्वतानां च दानानि दशैव तदनन्तरम् ॥ २१ ॥
ततो गुडादिधेनूनां चत्वारिंशदनुक्रमात् ।
एकन्यूनानि दानानि बध्यन्तेऽत्र यथाविधि ॥ २२ ॥
अलंकृतानां पञ्चाशच्चत्वारिंशद्गवामथ ।
दानान्यलङ्कृतगवीसमूहस्य ततस्त्रिधा ॥ २३ ॥
ततोऽनलङ्कृतगवां दानानि दश पञ्च च ।
तथाऽनलङ्कृतगवीसमूहस्य च सप्तधा ॥ २४ ॥
अलङ्कृतानां दानानि वृषाणामष्टधा तथा ।
ततोऽनलङ्कृतानान्तु दश दानानि पञ्च च ॥ २५ ॥
गवाह्निकप्रदानानि दशधा तदनन्तरम् ।
भूमेर्दानानि कीर्त्यन्ते पञ्चपञ्चाशदेव तु ॥ २६ ॥
आसनस्य प्रदानानि षडेव तदनन्तरम् ।
ततो वारिप्रदानानि षट्त्रिंशदिह संख्यया ॥ २७ ॥
तैजसानाञ्च पात्राणां दश दानान्यनन्तरम् ।
दानानि जलपात्राणां ततश्च नवसंख्यया ॥ २८ ॥
ततोऽन्नस्य प्रदानानि त्रिचत्वारिंशदेव तु ।
ततस्त्रीणि च भक्ष्यस्य पञ्चाऽथ लवणस्य च ॥ २९ ॥
ततो घृतस्य सप्तैव त्रीणि दध्नस्त्वनन्तरम् ।
क्षीरस्य च ततस्त्रीणि पञ्च चैक्षववस्तुनः ॥ ३० ॥
पानकस्य च चत्वारि फलानां नवधा ततः ।
ततश्चत्वारि मधुनोऽभ्यङ्गस्य षडनन्तरम् ॥ ३१ ॥

त्रयोदशाथ गन्धस्य ततो धूपस्य पञ्चधा ।
अनुलेपनदानानि चत्वारि तदनन्तरम् ॥ ३२ ॥
अष्टौ पुष्पस्य वस्त्राणां षड् युक्ता विंशतिस्ततः ।
त्रीणि यज्ञोपवीतस्य दानानि तदनन्तरम् ॥ ३३ ॥
सुवर्णस्याऽथ दानानि सप्तत्रिंशदनुक्रमात् ।
रजतस्य च दानानि त्रीण्येव तदनन्तरम् ॥ ३४ ॥
अलङ्कारस्य चत्वारि रत्नस्य नवधा ततः ।
गृहाणाश्चैव दानानि ततः सप्तदशैव तु ॥ ३५ ॥
नव प्रतिश्रयस्याऽथ शय्यायास्तु ततो नव ।
इन्धनस्याऽथ चत्वारि दीपस्यैकोनविंशतिः ॥ ३६ ॥
दानानि च पुराणानामेकोना विंशतिस्ततः ।
नानाविधानां विद्यानां चतुर्विंशतिरेव च ॥ ३७ ॥
त्रिंशद्दानानि कन्यानां प्रेष्याणान्तु ततो दश ।
सस्यानामथ दानानि पञ्चविंशतिरेव च ॥ ३८ ॥
तिलस्य दश दानानि तथाऽऽरामस्य पञ्चधा ।
कीर्त्यन्ते षोडशैवाऽत्र वृक्षस्य तदनन्तरम् ॥ ३९ ॥
सम्भारस्याऽथ चत्वारि पशूनामष्टधा ततः ।
कृष्णाजिनस्य सप्ताऽथ छत्रस्य दश पञ्च च ॥ ४० ॥
कीर्त्यन्ते पञ्चदशधा ततो दानान्युपग्रहः ।
एकादश च यानानां चत्वारि करिणामथ ॥ ४१ ॥
द्वादशाश्वस्य दानानि चत्वारि महिषस्य च ।
अष्ट चाऽऽरोग्यदानानि कीर्त्यन्ते तदनन्तरम् ॥ ४२ ॥
अभयस्य च दानानि त्रयस्त्रिंशत्ततः क्रमात् ।
सूर्य्यादिवारविहितान्येकादश ततः परम् ॥ ४३ ॥
मासोपलक्षितेऽन्यत्र दिनेष्वनियतेष्वथ ।
एकसप्ततिरुच्यन्ते दानानि तदनन्तरम् ॥ ४४ ॥
मासेषु नियतेष्वत्र नियतासु तिथिष्वथ ।
क्रमाद्दानानि कीर्त्त्यन्ते नानारूपाणि विंशतिः ॥ ४५ ॥

